# BIBLIOTHECA INDICA:

## COLLECTION OF ORIENTAL WORKS

PUBLISHED BY

## THE ASIATIC SOCIETY OF BENGAL.

New Series, Nos. 722, 760, 794, and 819.

# VṚIHAD-DEVATÁ

EDITED BY

THE LATE

RÁJÁ RÁJENDRALÁLA MITRA

FASCICULUS IV.

CALCUTTA:

PRINTED AT THE BAPTIST

श्रीगणेशाय नमः ।

# बृहद्देवता ।

## प्रथमोऽध्यायः ।

मन्त्रदृग्भ्यो नमस्कृत्य समाम्नायानुपूर्वशः ।
सूक्तर्गर्धर्चपादानामृक्षु[1] वक्ष्यामि दैवतम् ॥ १ ॥
वेदितव्यं दैवतं हि[2] मन्त्रे मन्त्रे प्रयत्नतः ।
दैवतज्ञो हि मन्त्राणां तदर्थमधिगच्छति[3] ॥ २ ॥
तद्विदां[4] तदभिप्रायानृषीणां मन्त्रदृष्टिषु ।
विज्ञापयति विज्ञानं कर्माणि विविधानि च ॥ ३ ॥
न हि कश्चिदविज्ञाय याथातथ्येन दैवतम्[5] ।
लौकिकानां वैदिकानां[6] कर्मणां फलमश्नुते ॥ ४ ॥
प्रथमो भजते त्वासां वर्गोऽग्निमिह दैवतम् ।
द्वितीयो वायुमिन्द्रं वा तृतीयः सूर्यमेव च[7] ॥ ५ ॥
अर्थमिच्छन्नृषिर्देवं यं यमाहायमस्त्विति ।

---

(१) ऋग्भ्य इति ख० ग० ङ० ।
(२) वेदितव्यं हि तत् सर्व्वमिति क० घ० ।
(३) तदर्थमवगच्छति इति ख० ।
(४) तद्विद्वानिति ख० घ० ।
(५) देवताः इति क० घ० ।
(६) लौकानां वैदिकानां वा इति ख० ग० ङ० ।
(७) सूर्यमेव तु इति क० घ० ।

प्राधान्येन स्तुवन्भक्त्या[१] मन्त्रस्तद्देव एव सः ॥ ६ ॥

स्तुतिस्तु नाम्ना रूपेण कर्मणा बान्धवेन च ।

स्वर्गायुर्धनपुत्राद्यैरर्थैराशीस्तु कथ्यते ॥ ७ ॥

स्तुत्याशिषौ तु यास्तृचु दृश्येते[२]ऽल्पास्तु ता इह ।

ताभ्यश्चाल्पतरास्ताः स्युः स्वर्गो याभिस्तु याच्यते ॥ ८ ॥

स्तुवन्तं[३] वेद सर्वोऽयमर्थयत्येष मामिति ।

प्रीतोऽत्यर्थं ब्रुवन्तञ्च सार्थं मामेष[४] पश्यति ॥ ९ ॥

स्तुवद्भिश्च ब्रुवद्भिश्च ऋषिभिस्तत्त्वदर्शिभिः[५] ।

भवत्युभय[६]मेवोक्तमुभयं ह्यर्थतः समम् ॥ १० ॥

प्रत्यक्षं देवतानाम यस्मिन्मन्त्रे प्रदृश्यते[७] ।

तमेवाहुः सुसम्पन्नं मन्त्रं लक्षणसम्पदा ॥ ११ ॥

तस्मात्तद्देवतानाम्ना[८] मन्त्रे मन्त्रे प्रयोगवित्[९] ।

बहुत्वमभिधानाच्च[१०] प्रयत्नेनोपलक्षयेत् ॥ १२ ॥

---

(१) स्तुवन् भक्त्येति ग० घ० ।

(२) स्तुत्याशिषस्तु यास्तृचु दृश्यन्ते इति क० घ० ।

(३) स्तुवंति इति ख० ङ० ।

(४) योऽयंमामेव इति क० ।

(५) स्तुवद्भिर्वा ब्रुवद्भिर्वा ऋषिभिर्मन्त्रदर्शिभिरिति ख० । मन्त्रेष्वर्थानुदर्शि-भिरिति क० ग० ।

(६) भवत्युतथ्यमिति क० घ० ।

(७) मन्त्रेऽभिधीयते इति ख० ग० ङ० ।

(८) तस्मात्तु देवतानाम्ना इति घ०, तस्मात्तु देवतां नाम्ना इति ख० ग० ।

(९) प्रयत्नतः इति घ० ।

(१०) बहुत्वमभिधानञ्च इति क० घ० ।

सम्पूर्णमृषिवाक्यं तु सूक्तमित्यभिधीयते।
दृश्यन्ते देवता यस्मिन्नेकस्य[१] बहुषु द्वयोः॥ १३॥
देवतार्षार्थछन्दोभ्यो[२] वैविध्यं तस्य जायते[३]।
ऋषिसूक्तन्तु यावन्ति सूक्तान्येकस्य[४] वै स्तुतिः॥ १४॥
देवतैका तु यावत्सु देवतायास्तदुच्यते[५]।
यावदर्थसमाप्तिः स्यादर्थसूक्तं वदन्ति तत्॥ १५॥
समानच्छन्दसो यास्तु[६] तच्छन्दःसूक्तमुच्यते।
वैविध्यमेतत्सूक्तानामिह[७] विद्याद्यथातथम्॥ १६॥
देवतानामधेयानि मन्त्रेषु त्रिविधानि तु।
सूक्तभाञ्ज्यथ ऋग्भाञ्जि तथा नैपातिकानि तु॥ १७॥
सूक्तभाञ्जि भजन्ते वै सूक्तान्यृग्भाञ्जि वै[८] ऋचः।
मन्त्रेऽन्यदैवतेऽन्यानि[९] निगद्यन्ते प्रसङ्गतः[१०]॥ १८॥

---

(१) भिन्नं तद्दृश्यते चास्मिन्नेतस्यामिति क॰ घ॰। एकस्येत्यत्र एकस्मिन्निति घ॰।
(२) देवतार्षार्थच्छन्दसः इति ख॰।
(३) वैविध्यञ्च प्रजायते इति ख॰ ग॰ ङ॰।
(४) ऋषिसूक्तानि तान्यत्र यावन्त्येकस्येति क॰ घ॰।
(५) अस्मिन् श्लोकार्द्धस्थले ख॰ ग॰ ङ॰ पुस्तकेषु श्रूयन्ते तानि सर्वाणि ऋषेः सूक्तं हि तस्य तत् इति पाठो वर्त्तते।
(६) याः स्युरिति ख॰ ग॰ ङ॰।
(७) वैविध्यमेवं सूक्तानामिहेति ख॰ ग॰ ङ॰।
(८) वै-इत्यत्र यैरिति क॰ ख॰ घ॰ ङ॰।
(९) यानि इति घ॰।
(१०) निगद्यन्तेऽत्र कानिचित् इति ख॰ ग॰ पुस्तकान्तरञ्च।

याज्ञोक्तान्याश्चर्याद्दा तानि नैपातिकानि तु।
तस्मादङ्गप्रकारेऽपि[१] सूक्ते स्यात्सूक्तभागिनी ॥ १९ ॥
देवता तद्यथासूक्तमविशेषं[२] प्रतीयते।
भिन्ने सूक्ते[३] वदेदेव देवतामिह लिङ्गतः ॥ २० ॥
तत्र तत्र यथावच्च मन्त्रान् कर्मसु[४] योजयेत्।
देवतायाः परिज्ञानात्तद्धि कर्म समृध्यते ॥ २१ ॥
आद्यन्तयोस्तु सूक्तानां प्रसङ्गपरिकीर्त्तनात्।
सोऽर्वभिर्देवतास्तास्ता उपेक्षेतेह[५] मन्त्रवित् ॥ २२ ॥
तत् खल्वाहुः कतिभ्यस्तु कर्मभ्यो नाम जायते।
सत्त्वानां[६] वैदिकानां च[७] यदन्यदिह[८] किञ्चन ॥ २३ ॥
नवभ्य इति नैरुक्ताः पुराणाः[९] कवयश्च ये।
मधुकः श्वेतकेतुश्च[१०] गालवश्चैव मन्यते[११] ॥ २४ ॥
निवासात्कर्मणो रूपान्मङ्गलाद्वाच आशिषः।

---

(१) अङ्गप्रकाशेऽपि इति क० ङ० घ०।
(२) अविशेषेति ख०, अविशेष्यमिति ग० ङ० पुस्तकान्तरञ्च।
(३) भिन्नसूक्ते इति क० घ०।
(४) कर्म प्रयोजयेदिति ख०।
(५) देवतानाम्ना उपेक्षेतेह इति ख०। देवतानामामपेक्षेतेह इति क० घ०।
(६) सत्त्वानामिति क०।
(७) वा इति क० ग०।
(८) यद्यान्यदिहेति क० घ०।
(९) पौराणा इति क० घ०।
(१०) मधुकाश्च तकेताश्चेति क० घ०।
(११) मन्यते इति क० ख० घ० ङ०।

यदृच्छयोपवसना[१] तथामुष्यायणाच्चपात्[२] ॥ २५ ॥
चतुर्थं इति तत्राऽऽर्यास्कगार्ग्यरथीतराः[३] ।
आग्निवोऽयार्थवैरूप्या[४] दाचः कर्मण एव च ॥ २६ ॥
सर्वाण्येतानि नामानि कर्मणाद्याह[५] शौनकः ।
आशीरूपञ्च वाक्यञ्च[६] सर्वं भवति कर्मतः ॥ २७ ॥
यदृच्छयोपवसना[७] त्तथामुष्यायणाच्च[८] यत् ।
तथा तदपि कर्मैव तच्छृणुध्वम्[९] हेतुतः[१०] ॥ २८ ॥
प्रजाः कर्मसमुत्था[११] हि कर्मतः सत्वसङ्गतिः[१२] ।
कश्चित् संज्ञायते[१३] सच्च निवासात्तत्प्रजायते[१४] ॥ २९ ॥
यादृच्छिकं तु नामाभिधीयते[१५] लिङ्ग कुत्रचित्[१६] ।

---

(१) यदृच्छयोपवसनादिति क० ङ० घ० ।
(२) तथा मुष्यायणाचेति क० घ० ।
(३) रथन्तरा इति ख० ।
(४) आग्निवोऽय च वैरूप्यात् इति क० घ० । आग्निवोऽर्थवैरूप्यादिति ख० ङ० ।
(५) कर्मतश्चाह इति क० ग० ।
(६) वाचच इति ख० ग० ङ० ।
(७) यदृच्छयोपवसनादिति ख० ।
(८) यदृच्छया निवासाच यद्वा मुष्यायणाचेति क० घ० ।
(९) तच्छृणु तं च इति ग० ।
(१०) हैतवः इति ख० ग० ङ० पुस्तकान्तरच ।
(११) प्रजाकर्मसमुत्था इति क० ख० ।
(१२) कर्मजः सच जायते इति क०, सत्वगा गतिः इति ख० ।
(१३) यतो निवसते इति क० घ०, क्वचित् स जायते इति ग० ।
(१४) तच जायते इति घ० ।
(१५) नाम नामाधीयते इति ख० । यादृच्छिकं नाम नाम धीयते क० ङ० ।
(१६) यच कुत्रचिदिति ख०, यत्रिव क्वचिदिति घ० ।

औपम्यादेव(१) तद्विद्याद्(२) भावस्यैवेह कस्यचित् ॥ २० ॥
नाकर्मकोऽस्ति भावो हि न(३) नामास्ति(४) निरर्थकम् ।
नान्यत्र भावान्नामानि तस्मात्सर्वाणि कर्मतः ॥ २१ ॥
मङ्गलात् क्रियते यत्तु नामोपवसनाच्च(५) यत् ।
भवत्येव तु सा ह्याशीः स्वस्त्यादेर्मङ्गलानि च(६) ॥ २२ ॥
अपि कुत्सितनामाय(७)मिह(८) जीवेत्कथञ्चिरम् ।
इति क्रियन्ते नामानि भूतानां विदितान्यपि(९) ॥ २३ ॥
मन्त्रा नानाप्रकाराः सुदृष्टा वै(१०) मन्त्रदर्शिभिः ।
स्तुत्या चैव विभूत्या च वाक्प्रभावेण चात्मनः(११) ॥ २४ ॥
स्तुतिः प्रशंसा निन्दा च संशयः परिदेवना(१२) ।
स्पृहाशीः कत्थना याच्ञा(१३)प्रश्नः प्रैषः प्रवह्लिका(१४) ॥ २५ ॥
नियोगश्चानुयोगश्च श्लाघा विलपितञ्च यत् ।

---

(१) औपम्यादपीति ख०, औपम्यादिह इति ग० घ० ङ० ।
(२) तद्वत्ते इति घ० ।
(३) ना इति घ० ।
(४) तन्नामाच्च निरर्थकमिति ख० ।
(५) यच्च नामोपवचनञ्च इति क० ख० घ० ।
(६) आशास्ते मङ्गलानि च इति क० घ० । मङ्गलादिहेति ख० ङ० ।
(७) अपिकित्सितनामायमिति ख० ।
(८) अपि इति घ० ।
(९) निन्दितान्यपि इति क० घ० ।
(१०) ये इति ग० ङ० पुस्तकान्तरे च ।
(११) प्रभावाद्देवतात्मन इति ख० ग० अन्यत्पुस्तके च ।
(१२) परिवेदना इति क० ङ० ।
(१३) कथनायाच्ञेति क० ।
(१४) प्रवल्हिका इति ख० ग० ।

आचिख्यासा(१)ऽथ संलापाः परिभाख्यान(२)मेव च ॥ ३६ ॥
आहनस्या नमस्कारः प्रतिरोध(३)स्तथैव च ।
सङ्कल्पश्च प्रलापश्च प्रतिवाक्यञ्च नाम यत्(४) ॥ ३७ ॥
प्रतिषेधोपदेशौ च प्रमादापह्नवौ च यत्(५) ।
उपप्रैषश्च यः प्रोक्तः सञ्ज्वरो नाम(६) विस्मयः ॥ ३८ ॥
आक्रोशोऽभिस्तवश्चैवा(७)क्षेपः शापस्तथैव च ।
उपसर्गो निपातश्च(८) नाम चाख्यातमित्यपि(९) ॥ ३९ ॥
भूतं भव्यं भविष्यच्च पुमांस्त्रय(१०)नपुंसकम् ।
एवंप्रकृतयो मन्त्राः सर्ववेदेष्विति स्थितिः(११) ॥ ४० ॥
तेषां निदर्शनार्थीया(१२) ऋचोऽर्धर्चाः पदानि च ।
ब्राह्मणे चाथ कल्पे च निगद्यन्तेऽत्र कानिचित्(१३) ॥ ४१ ॥

---

(१) आचिख्यासेति ख० ।
(२) सल्लापाः परिभाख्यानं इति घ० ।
(३) प्रतिरोधः इति घ० प्रतिषेधः इति अन्यत्पुस्तकञ्च ।
(४) तथैव च इति ग० अन्यत्पुस्तकञ्च ।
(५) च च इति ग० अन्यत्पुस्तकञ्च ।
(६) यश्च इति ख० ग० ङ० अन्यत्पुस्तकञ्च ।
(७) आक्रोशोऽभिष्टवश्चैव इति ग० अन्यत्पुस्तकञ्च, आक्रोशोऽभिष्ठवश्चैव इति ख० ।
(८) उपसर्गा निपाताश्चेति क० घ०, उपसर्गा निपातश्चेति ख० ।
(९) चाख्यानमेव चेति क० ।
(१०) स्त्री च इति ग० अन्यत्पुस्तकञ्च ।
(११) सर्ववेदेषु सर्वशः इति ख० ग० ङ० अन्यत्पुस्तकञ्च । सर्ववेदेष्विति स्थितिरिति घ० ।
(१२) वाक्यार्थदर्शनार्थीया इति ङ० अन्यत्पुस्तकञ्च ।
(१३) विधौ कल्पे च देवे च निगद्यन्तेऽत्र कानिचिदिति क० ख० ।

शब्देनोच्चरितेनेह येन द्रव्यं प्रतीयते ।
तदाक्षरविधौ युक्तं नामेत्याहुर्मनीषिणः ॥ ४२ ॥
अष्टौ यत्र प्रयुज्यन्ते नानार्थेषु विभक्तयः[१] ।
तन्नाम कवयः प्राहुर्भेदे वचनलिङ्गयोः ॥ ४३ ॥

क्रियासु बह्वीष्वभिसंश्रितो यः
पूर्वापरीभूत इहैक एव ।
क्रियाभिनिर्वृत्तिवशेन सिद्ध
आख्यातशब्देन तमर्थमाहुः ॥ ४४ ॥
क्रियाभिनिर्वृत्तिवशोपजातः
कृदन्तशब्दाभिहितो यदा स्यात् ।
संख्याविभक्त्यव्ययलिङ्गयुक्तो
भावस्तदा द्रव्यमिवोपलक्ष्यः[२] ॥ ४५ ॥

यथा नानाविधैः शब्दैरपश्यन्नृषयः पुरा ।
विविधान्यपि[३] वाक्यानि तान्यनुक्रमतः शृणु ॥ ४६ ॥
रूपादिभिः स्तुतिः प्रोक्ताऽथाशीः[४] स्वर्गादिभिस्तथा ।
यानि वाक्यान्यतोऽन्यानि[५] तान्यपि स्युरनेकधा ॥ ४७ ॥

---

(१) विभक्तय इति ग० अन्यत्पुस्तकञ्च ।
(२) शब्देनेत्यादि भावस्तदा द्रव्यमिवोपलक्ष्यः इत्यन्तः सन्दर्भः क० ख० चिह्नितपुस्तकयोर्नोपलभ्यते ।
(३) विविधानीह इति ख० ग० घ० ।
(४) चाशीरिति क० ख० ग० ।
(५) यानि इति अन्यत्पुस्तकञ्च ।

मन्त्रे[१] प्रशंसा[क] भोजस्य[२] शिक्षन्[ख] सौभरेः[३][ग] स्तुतिः ।
आक्रोशार्थास्तु वृषन्ते[घ] माता चेत्यभिमेषति[४] ॥४८॥
स्वप्नोपमन्त्रं[ङ] निन्दा च[५] शापो[च] येमेत्यृगेव तु ।
याञ्चा[६] [छ]यदिन्द्रचित्रेति क्षेपो भीदमिति त्वृचि ॥४९॥
आशीस्तु[ज] वात आवातु दृष्टेति परिदेवना[७] ।
प्रश्नस्य प्रतिवाक्यस्य[झ] पृच्छामि त्वेत्यृचौ पृथक् ॥५०॥
संशयोऽधःस्विदासीच्च[ञ] कत्थना[८] स्वा[ट]दहं मनुः ।
इमं नो[ठ] यज्ञमित्यस्यां[ड] नियोगः[९] पाद उच्यते[१०] ॥५१॥

(१) मन्त्रः इति क० घ० ।
(२) प्रसङ्गाद्भोजस्य इति क० घ० मन्त्रप्रशंसा भोजस्येति ग० ।
(३) सौभरस्तुतिरिति ख० ।
(४) मा मामेत्याभिमेष्यति इति ख०, माता मेत्यभिमेषति इति क०ङ० ।
(५) स्वप्नोपमनतिदाच इति ख० ।
(६) याच्ञां इति ख०, याच्ञा इति ग०, यचना इति घ० ङ० ।
(७) दृष्टादिपरिवेदना इति घ०, दृष्टेतिपरिवेदना इति ख० च० ।
(८) संशयोधः स्विदासीदित्यकथना इति क० घ०, कच्छना इति ङ० ।
(९) यज्ञमित्यास्यामियोगः इति ख० ।
(१०) उत्तमे इति क० घ० ।

(क) ऋ० १०,१०७,१० । (ख) ऋ० ८,२१,१८ । (ग) ऋ० ८,१९, २ । (घ) ऋ० १,१६०, २१; १८५, १० । (ङ) ऋ० १०, ११७, ६ । (च) ऋ० ८, २७, २० । (छ) ऋ० ५,३९, १ । (ज) ऋ० १०,१८६, १ । (झ) ऋ० १, १६४, ३४ । (ञ) ऋ० १०, १२९, ५ । (ट) ऋ० ४, २६, १ । (ठ) ऋ० १, १, ४ । (ड) ऋ० १, २६, १ ।

(क)इह ब्रवीत्यनुयोगः संलाप(१)स्तृगुपोपमे(२)(ख) ।
प्रतिषेधोपदेशौ(३) तु अक्षैर्मेत्य(ग)क्षसंस्तुतौ(४) ॥५ २॥
आख्यान(५)न्तु हये जाये(घ) विलापस्तु(६)नदस्य मा(ङ) ।
अवीरामिव मां(च) श्लाघा(७) सुदेव इति(छ) तु स्पृहा ॥५ ३॥
नमस्कारः(ज) शुनःशेपे,(८) नमस्ते अस्तु विद्युते ।
सङ्कल्पयन्निदं तुभ्योऽहं स्यामिति यदुच्यते(९) ॥५ ४॥
सङ्कल्पस्तु(झ) यदिन्द्राहं प्रलापस्त्वेतमस्य नुः(ञ)(१०) ।
महानग्न्याहनस्या तु प्रतिरोधो भुगित्युत(११) ॥५ ५॥

---

(१) संलाप इति क० ग० घ० ।
(२) ऋतुगुपोपमे इति ख० ग० अन्यत्पुस्तकञ्च ।
(३) प्रतिषेधापदेशौ इति घ० ङ० ।
(४) अक्षैरित्यक्षसंस्तुत, इति घ० ।
(५) आख्यातमिति पुस्तकान्तरम् ।
(६) स्यादिति ख० ग० पुस्तकान्तरञ्च ।
(७) अवीरामात्मनः श्लाघा इति ख० ग० घ० ।
(८) नमस्कारो मत ऋषे इति क० घ० ग्रैष इति ख०, ग्रेषे इति ङ० ।
(९) यां कल्पयन्ति नो रयः परिचामुक्तामिह ते इति क० ।
(१०) यः इति ख० ग० ङ० पुस्तकान्तरञ्च ।
(११) महानग्न्याह नस्याक्षात्प्रतिरागो भुगित्यपि इति ख०, भुगि-त्यपि इति ग०, भुगित्यभि इति पुस्तकान्तरं ।

---

(क) ऋ० १, ३५, ६ । (ख) ऋ० ८, ८२, ४ । (ग) ऋ० १०, ३४, १२ । (घ) ऋ० १०, ९५, १ । (ङ) १, १७९, ४ । (च) ऋ० १०, ८६, ९ । (छ) ऋ० १०, ९४, १४ । (ज) ऋ० १, २४, १२, १३ । (झ) ऋ० ८, १४, १ । (ञ) ऋ० ६, १५, ५ ।

प्रमादत्त्वेष[१]इन्द्राहं[क] नमस्त[ख] इत्यभिप्लवः[२]।
इन्द्राकुत्सेत्युपप्रैषो[ग](३) न विजानामि[घ] संज्वरः॥ ५६॥
होतापघदिति प्रैषः[४] को अद्येति तु विस्मयः।
जामञ्च[५]पङ्कवो नेति विततादिः[ङ] प्रवह्लिका[६]॥ ५७॥
[च]न मृत्युरासीदित्येतामाचिख्यासां[७] प्रचक्षते[८]।
अभिशापो[९]प्रजाः सन्तु भद्र[१०]माशीस्तु[छ] गौतमे[११]॥ ५८॥
बह्व्येवं प्रकार[१२]न्तु शक्यं द्रष्टुमिहार्षजम्[१३]।

---

(१) प्रमोदस्त्वेष इति घ०।

(२) प्रमादस्त्वेकइन्द्राहं नमस्त इत्यन्ध्व इति ख०, नमस्त इत्यपन्ध्वः इति ग०।

(३) इन्द्राकुत्सेत्यपप्रैषो इति ख०, इन्द्राभरेत्युपप्रैषो इति क० ङ०।

(४) होतापक्षदितिप्रैषा इति ख०।

(५) कामये इति घ०, जामस्तु इति ग०, यामनु इति ख०।

(६) प्रवह्लिका इति ख० ग०।

(७) माचिख्यासमिति क०, माविख्यासामिति ख०, माचिख्यासमिति घ०।

(८) प्रचक्षये इति क०, प्रचक्षमे इति ख०।

(९) आविशापो: इति ख०।

(१०) भद्रमिति ख०।

(११) इगौतमे इति ख०।

(१२) अक्षमेव प्रकारमिति ख०।

(१३) इतीदृशमिति ख० ग० पुस्तकान्तरच।

---

(क) ऋ० १०, ११९, ६। (ख) ऋ० ७, ३८, १०। (ग) ऋ० ५, ३१, ९। (घ) ऋ० १, १६४, ३७। (ङ) ऋ० १, १५२, ४। (च) ऋ० १०, १२९, २। (छ) ऋ० १, ७९, १०।

वक्तुं प्रयोगतश्चैषामृक्सूक्तार्धर्चसंश्रितम्[१] ॥ ५९ ॥
एते तु मन्त्रवाक्यार्था देवतां सूक्तभागिनीम्[२] ।
संश्रयन्ते[३] यथान्यायं स्तुतिश्चैवानुमानिकी[४] ॥ ६० ॥
भवद्भूतं भविष्यच्च जङ्गमं स्थावरञ्च यत्[५] ।
अस्यैके[६] सूर्यमेवैकं प्रभवं प्रलयं विदुः ॥ ६१ ॥
[क]असतश्च [ख]सतश्चैव [ग]योनिरेषा[७] [घ]प्रजापतिः ।
यदु[ङ]क्षरञ्चा[च]व्यय[८]ञ्च यच्चैत[छ]द्ब्रह्म[९]शाश्वतम् ॥ ६२ ॥
कृत्वैव[१०] हि[ज] त्रिधा[झ]त्मानमेषु लोकेषु [ञ]तिष्ठति ।

(१) ऋक्सूक्तार्धर्चप्रत्ययमिति इति क०, चैषा ऋक्सूक्तार्धर्चसंश्रित-मिति ख० ।

(२) देवतां सूक्तभागिनामिति क० घ०, देवता सूक्तभागिनी इति ख० ।

(३) संभूयते इति ख० ।

(४) स्वा आनुमानिकी इति ख०, तत्रानुमानिकी इति घ० ।

(५) भवद्भूतस्य भव्यस्य जङ्गमस्थावरस्य च इति ख० ग० पुस्तकान्तरञ्च ।

(६) एते इति क० घ० ।

(७) एषामिति क० ।

(८) यदक्षरञ्च वाच्यमिति ग०, वाक्यमिति ङ० पुस्तकान्तरञ्च ।

(९) यचैतद्ब्रह्म इति ग० ङ० पुस्तकान्तरञ्च ।

(१०) कृत्वैव इति ख० ग० पुस्तकान्तरञ्च ।

---

(क) ऋ० ५, १२, ४ । (ख) ऋ० १, ३६, ३ । (ग) ऋ० १, १०४, १ । (घ) ऋ० ४. ५३, २ । (ङ) ऋ० १, १६४, ४२ । (च) ऋ० ६, ३७, ३ । (छ) ऋ० १, १०, ४ । (ज) ऋ० १, ११७, २४ । (झ) ऋ० १, १६३, ६ । (ञ) ऋ० १, ५१, ११ ।

[क]देवान् यथायथं[ख] सर्वान् निवेश्य[ग] स्वेषु[घ] रश्मिषु ॥ ६ ३ ॥
एतद्भूतेषु[१] लोकेषु अग्निभूतं स्थितं त्रिधा ।
[ङ]ऋषयो [च]गीर्भि[छ]रर्चन्ति व्यक्तितं[२] [ज]नामभि[झ]स्त्रिभिः॥ ६ ४ ॥
तिष्ठत्येव च[३] [ञ] भूतानां[ट] जठरे जठरे ज्वलन् ।
त्रिस्थानं चैनमर्चन्ति होत्रायां[ठ] वृक्तबर्हिषः ॥ ६ ५ ॥
इहैव[ड] पवमानो[ढ]ऽग्नि[४]र्मध्यमोऽग्निस्तु[ण] पावकः[५] ।
अमुष्मिन्नेव[६] विग्नेस्तु लोकेऽग्निः[त] शुचिरुच्यते ॥ ६ ६ ॥
इत्याग्निभूतस्तृषिभिर्लोके स्तुतिभिरीडितः[७] ।
[थ]जातवेदाः स्तुतो मध्ये स्तुतो[द] वैश्वानरो दिवि ॥ ६ ७ ॥

---

(१) एतमेवेषु इति क० घ० ।
(२) व्यक्तिनमिति ङ० घ० पुस्तकान्तरञ्च ।
(३) एव च इति ख०, एव हीति ग० पुस्तकान्तरञ्च ।
(४) पवमानाग्निरिति क० घ० ।
(५) वनस्पतिरिति ख० ग० ङ० पुस्तकान्तरञ्च ।
(६) अमुष्मिन्नेव इति ग० ङ० पुस्तकान्तरञ्च ।
(७) ईजितः इति क० ख० ङ० ।

---

(क) ऋ० १, १, २ । (ख) ऋ० १, १९१, ८ । (ग) ऋ० ८, ८४, ८ । (घ) ऋ० १, १३४, ४ । (ङ) ऋ० १, ४८, १४ । (च) १, ९, ९ । (छ) ऋ० १, १०, १ । (ज) ऋ० १, १५५, ६ । (झ) ऋ० ८, ५६, ५ । (ञ) ऋ० ३, २७, ९ । (ट) ऋ० १, १०४, ९ । (ठ) ऋ० १, ३, ३ । (ड) ऋ० ८, १०१, १४ । (ढ) ऋ० १, १, २ । (ण) ऋ० १, ६०, ४ । (त) ऋ० १, ६६, १ । (थ) ऋ० १, ७७, ५ । (द) १, ५९, ६ ।

(क)रसान् रश्मिभि(ख)रादाय(ग) वायुनाऽयं गतः सह[१]।
(घ)वर्षत्येष च यल्लोके(ङ) तेने(च)न्द्र (छ)इति स स्मृतः[२] ॥ ६८ ॥
(ज)अग्नि(झ)रस्मि(ञ)न्नथेन्द्रस्तु मध्यमो[३](ट)वायुरेव च।
(ठ)सूर्यो (ड)दिवीति विज्ञेयास्तिस्र एवेह[४] देवताः ॥ ६९ ॥
एतासामेव माहात्म्यान्नामान्यत्वं विधीयते।
तत्तत्स्थानविभागेन तत्र तत्रोपलक्षयेत्[५] ॥ ७० ॥
(ढ)तासा(ण)मियं (त)विभूतिर्हि (थ)नामानि यदनेकशः।
(द)आहुस्तासान्तु मन्त्रेषु(ध) कवयोऽन्योऽन्ययोनिताम्[६] ॥७१॥
यथास्थानं(न) प्रदिष्टास्ता[७] नामान्यत्वेन देवताः।

---

(१) सह संस्तुतः इति क० घ०।
(२) तु स्तुतः इति क० घ०।
(३) मध्यतः इति ग०।
(४) एवहि इति क० घ०।
(५) तत्र तत्रेह दृश्यते इति ग० ङ० पुस्तकान्तरञ्च।
(६) अन्योऽन्ययोगितामिति ख०।
(७) स्तु इति क०।

---

(क) ऋ० १, १६, ८। (ख) ऋ० ४, २६, ६। (ग) ऋ० १, १४, १०। (घ) ऋ० ५, ८४, ३। (ङ) ऋ० १, २१, ६। (च) ऋ० १, २, ५। (छ) ऋ० १, १०६, ३। (ज) ऋ० १, १, २। (झ) ऋ० १, ६, ६। (ञ) ऋ० १, ४, ३। (ट) ऋ० १, १३४, ३। (ठ) ऋ० १, २३, १७। (ड) ऋ० १, ६, १। (ढ) ऋ० १, ३२, ८। (ण) ऋ० १, ४८, ७। (त) ऋ० १, ३०, ५। (थ) ऋ० १, ७२, ३। (द) ऋ० १, ११८, ३। (ध) ऋ० ५, ५७, ८। (न) ऋ० ३, ३०, १२।

तद्भक्तास्तत्प्रधानाश्च[क] केचिदेवं वदन्ति ताः[१] ॥ ७१ ॥
[ख]पृथक् [ग]पुरस्ताद्ये तूक्ता[२] लोकादिपतय[घ][३]स्त्रयः ।
[ङ]तेषा[च]मात्मैव तत्सर्वं यद्यद्भक्तिः प्रकीर्त्यते[४] ॥ ७२ ॥
तेजस्त्वे[छ] वायुधं[५] प्राङ्र्वाहनश्चैव तस्य तत्[६] ।
[ज]इमामैन्द्रीश्च [झ]दिव्याश्च [ञ]वाचमेवं पृथक् स्तुताम् ॥ ७४ ॥
बहुदेवतायाः [ट]स्तुतयो द्वन्द्वग्रः स्तुतयश्च[७] याः ।
प्राधान्यमेव सर्व्वासु[८] पतीनामेव[९][ठ] तास्वपि ॥ ७५ ॥

---

(१) नैवं केचिद्वदन्ति तु इति क० घ०, तु इत्यत्र ताः इति पुस्तकान्तरं ।

(२) येत्यूक्ता इति ख०, पुरस्ताद्यौक्ता इति घ० ।

(३) लोकाधिपतयः इति क० घ ।

(४) यदन्यद्भक्तिः कीर्त्यते इति क० घ० ।

(५) तेजस्ते वायवः इति क० ङ०, वायवाः इति ग० । तेजसे वायवा इति ख०, ।

(६) यस्य यत् इति क० ख० ग० ङ० पुस्तकान्तरञ्च ।

(७) द्विवत्सं स्तुतयश्च इति ग० ङ० पुस्तकान्तरञ्च, द्विवत्सं ततयश्च इति ख० ।

(८) प्राधान्यमेषां भूतानां इति क० घ० ।

(९) इव इति ख० ग० ङ० ।

---

(क) ऋ० ५, ६७, २ । (ख) ऋ० १, १३१, २ । (ग) ऋ० १, १२३, १० । (घ) ऋ० १, ३४, २ । (ङ) ऋ० १, २, १ । (च) ऋ० १, ११५, १ । (छ) ऋ० २, १५, ४ । (ज) ऋ० १, ३१, १९ । (झ) ऋ० ८, ८७, १७ । (ञ) ऋ० १, ४०, ६ । (ट) ऋ० ६, ३४, १ । (ठ) ऋ० २, २८, ८ ।

(क)स्थानं (ख)नामानि भक्तीश्च[१] देवतायाः स्तुतौ स्तुतौ ।
सम्पाद्यमुपेक्षेत[२]याङ्कांश्चिदिह सम्पदम् ॥ ७६ ॥
अग्निभक्तिस्तु तान् सर्वान्(ग)ग्नावेव[३] समापयेत् ।
यदिन्द्रभक्ति तच्चेन्द्रे[४] (घ)सूर्ये[५] सूर्यानुगञ्च(ङ) यत् ॥ ७७ ॥
निरूप्यते[६] हवि(च)र्यस्यै[७] सूक्तन्तु (छ)भजते च (ज)या ।
(झ)सैव (ञ)तत्र प्रधानं स्यान्न[८]निपातेन (ट)याः (ठ)स्तुताः ॥ ७८ ॥
(ड)इति[९]त्रयाणामेतेषा[१०] (ढ)मुक्तः सामासिको विधिः ।
समासेनैवमुक्तस्तु[११] विस्तरेण त्वनुक्रमः[१२] ॥ ७९ ॥

---

(१) भक्तिश्चेति क० घ० ।
(२) संवादो यस्त्वपेक्षेत इति क० ।
(३) या सर्व्वामग्नावेव इति क० ।
(४) यदिन्द्रभक्तितश्चेन्द्रे इति क० घ० ।
(५) सौर्य्ये इति ङ० पुस्तकान्तरञ्च ।
(६) निवप्यत इति घ० ।
(७) यस्मै इति घ० ।
(८) तत्र तत्र प्रधानोऽसौ न इति क० घ० ।
(९) इह इति क० घ० ।
(१०) एवैषामिति ग० ।
(११) समापयन्तु तत्सर्व्वमिति क० घ० ।
(१२) अनुक्रमादिति घ० ।

---

(क) ऋ० ५, ७६, ४ । (ख) ऋ० १, ७२, ३ । (ग) ऋ० १, १२४, १ । (घ) ऋ० १, २३, १७ । (ङ) ऋ० १, १, ६ । (च) ऋ० १, १२, १ । (छ) ऋ०, १, ६४, २ । (ज) ऋ० १, १२३, ४ । (झ) ऋ० १, २२, २ । (ञ) ऋ० १,४८, १० । (ट) ऋ० १, ६, ६ । (ठ) ऋ० १, १७, ६ । (ड) ऋ० १, २३, १७ । (ढ) ऋ० ४, ३७, ७ ।

अवश्यं वेदितव्यो हि नाम्ना(१) (क)सर्वस्य विस्तरः ।
न हि (ख)सामान्यविज्ञाय (ग)मन्त्राः शक्या हि वेदितुम् ॥ ८० ॥
सत्त्वान्यमूर्त्तान्यपि च (घ)देवता च(२) महर्षयः ।
तुष्टुवुर्ऋषयः शक्त्या(३)(ङ) तासु तासु स्तुतिष्विह(च) ॥ ८१ ॥
यैस्त्वग्नि(४)(छ)रिन्द्रः (ज)सोमश्च (झ)वायुः (ञ)सूर्यो (ट)बृहस्पतिः ।
(ठ)चन्द्रोऽथ(ड)विष्णुः(ढ)पर्जन्यः(ण)पूषा वा(५)(त)ऽप्यृभवो(६)(थ)ऽश्विनौ ॥ ८२
(द)रोदसी (ध)मरुतो (न)देवाः(७) (प)पृथिव्यापः (फ)प्रजापतिः ।

---

(१) नाम्नां इति क० ङ०, नाम्नः इति घ० ।

(२) देवतावदिति क० घ० ।

(३) तुष्टुवुश्च शशंसश्चेति क० घ० ।

(४) यैरग्निरिति घ० ।

(५) वा इति ख० ङ० पुस्तकान्तरञ्च ।

(६) पूषोवा भगवः इति क० घ० ।

(७) देवाः इति क० घ० ।

---

(क) ऋ० १०,१३७,६ । (ख) ऋ० १, ७२, ३ । (ग) ऋ० ६,१०,१४ । (घ) ऋ० १, २२, ५ । (ङ) ऋ० २, २८, ९ । (च) ऋ० १, १, २ । (छ ऋ० १, १, २ । (ज) ऋ० १, २, ५ । (झ) ऋ० १, १८, ४ । (ञ) ऋ० १, ११४, ३ । (ट) ऋ० १, २३, १७ । (ठ) ऋ० १, १५०, ३ । (ड) ऋ० १, २२, १६ । (ढ) ऋ० ४, ५७, ८ । (ण) ऋ० १, २३, १४ । (त) ऋ० १, ११०, १ । (थ) ऋ० ५, ७५, ७ । (द) ऋ० १, १६७, ५ । (ध) ऋ० १, १५, २ । (न) ऋ० १, २३, १९ । (प) ऋ० १, २२, १६ । (फ) ऋ० ४, ५३, २ ।



5875

(क)देवौ च (ख)मित्रावरुणौ पृथक् सह च ता(ग)वुभौ ॥८३॥
(घ)विश्वे च देवाः (ङ)सविता (च)त्वष्टा वै रूपकृन्मतः(१) ।
(छ)अश्वो(ज)ऽग्नि(झ)र्त्विजो(ञ)वज्रो(२)(ट)ग्रावाणो रथसंयुतः(३) ॥७४॥
(ठ)स्तुताः पृथक् पृथक् (ड)स्वैः स्वैः सूक्तैर्ऋग्भिश्च(४) (ढ)नामभिः ।
स्तुतौ स्तुतौ प्रवक्ष्यामि (ण)तानि (त)तेषामनुक्रमात् ॥८५॥
व्यवस्थे(थ)त्यत्रमाग्नेयं लिङ्गै(द)रग्नेश्च(५) लक्षितम् ।
हविष्यद्भिः(६) प्रधानैश्च(७) नामाङ्कानैश्च केवलैः ॥८६॥

---

(१) रूपकृन्मुखः इति घ० ।
(२) यज्ञः इति घ० ।
(३) रथसंयुगः इति घ० ।
(४) सूक्तैर्वृक्षु च इति घ० ।
(५) तु इति घ० ।
(६) हविष्यद्भि इति ग० घ०, हविर्भिरिति पाठः समीचीनः ।
(७) निरूप्यैवमिति घ० ।

---

(क) ऋ० ६, ५९, ५। (ख) ऋ० १, ३५, १। (ग) ऋ० १, १७९, ६। (घ) ऋ० १, ८९, १०। (ङ) ऋ० १, २२, ८। (च) ऋ० १, ३२, २। (छ) ऋ० १, ३६, ८। (ज) ऋ० १, १४०, २। (झ) ऋ० १, ६०, ३। (ञ) ऋ० १, ५१, ७। (ट) ऋ० १, ८९, ४। (ठ) ऋ० ४, ३७, ७। (ड) ऋ० १, ६८, ४। (ढ) ऋ० १, १५५, ६। (ण) ऋ० १, ५३, ६। (त) ऋ० १, २, १। (थ) ऋ० १, ३१, १३। (द) ऋ० १, २४, २।

ऐन्द्रस्तु[क][१] मन्त्रो[२] वायव्यैर्लिङ्गै[ख]रैन्द्रैश्च लक्ष्यते[३] ।
नामधेयैश्च[४] [ग]वज्रस्य बलकृतया बलेन च ॥ ८७ ॥
सौर्यस्तु लिङ्गैः[घ] सूर्यस्य[५] गुणैः सर्वैस्तु[६] तैजसैः ।
[ङ]नामभिश्चैव[७] चन्द्रस्य सूक्ताश्च[८] [च]भजतेऽत्र यैः[९] ॥ ८८ ॥
एतासां[१०] देवतानान्तु नामधेयानुकीर्त्तनैः ।
[छ]यस्य यस्येह यावन्ति न व्यवस्यन्त्य[ज]तो[११][झ]ऽन्यथा ॥ ८९ ॥
[ञ]अयं प्रयोगस्त्वेतेषां[ट] ज्योतिषां[१२][ठ] त्रिषु[ड] वर्त्तता ।

(१) ऐन्द्रेस्तु इति ख० घ० ।

(२) मन्त्रैः इति घ० ।

(३) लक्षितमिति घ० ।

(४) नामभिश्चैव इति क० घ० ।

(५) सौर्य्यश्च इति घ० ।

(६) च इति ख० घ० ।

(७) नामधेयैश्चेति ख० ग० ङ० ।

(८) सूर्य्यन्तु इति क० घ० ।

(९) यः इति ङ० पुस्तकान्तरच, अखिलैरिति घ० ।

(१०) अन्यासामिति घ० ।

(११) न व्यवस्यत्यतः इति ग० घ० ।

(१२) ज्योतिःषु इति ख० घ० ।

(क) ऋ० १, १४७, ४ । (ख) ऋ० ३, ५३, ८ । (ग) ऋ० ५, ३२,७ ।
(घ) ऋ० १, १४, ६ । (ङ) ऋ० १, १५५, ६ । (च) ऋ० १, १२३,४ ।
(छ) ऋ० १, ५, ४ । (ज) ऋ० १, ६, ९ । (झ) ऋ० ४, ३२, ८ ।
(ञ) ऋ० १, १६, ७ । (ट) ऋ० १, ११३, १ । (ठ) ऋ० १, १५, ४ ।
(ड) ऋ० १, ५६, २ ।

लोकेषु मन्त्रवि(क)द्विद्वान् प्रयोगेणावबोदिति ॥ ९० ॥
(ख)नीयतेऽयं नृभिर्यस्मा(ग)च्चयत्य(घ)स्मा(ङ)दृषौ च तं[१] ।
(च)तेने (छ)मौ च (ज)क्रतुः (झ)कर्म समानामनौ पृथक् पृथक्[२] ॥ ९१ ॥
य(ञ)द्विद्यते च(ट) जातस्य[३](ठ) जातैर्यद्वाऽच[४]विद्यते ।
तेनेमौ तुल्यनामानावुभौ लोकौ समाप्लुतः[५] ॥ ९१ ॥
विश्वजनयमेतेषां[६] (ड)भ्राजते ध्योति (ढ)मध्यमः ।
निपातमात्रे कल्पन्ते[७] तथा[८]न्येयानि कानिचित् ॥ ९२ ॥

---

(१) यज्ञादिति घ० ।
(२) समानगौ इति घ० ।
(३) यतस्येति ख०, जातः सन् इति घ० ।
(४) चयेति घ० ।
(५) समम्नुता इति घ० ।
(६) वजन्तिरयमेकस्तु इति घ०, विश्वज्य नयमेतेषामिति ख० ।
(७) कल्पन्ते इति घ०, कथ्यन्ते इति ग० ।
(८) तस्य इति घ० ।

---

(क) ऋ० १, २४, १३ । (ख) ऋ० ८, २७, १ । (ग) ऋ० ४, २१, ४ । (घ) १, १७१, ४ । (ङ) ऋ० १, १०५, १६ । (च) ऋ० १, २१, ६ । (छ) ऋ० २, ४०, २ । (ज) ऋ० १, १७, ५ । (झ) ऋ० १, ३१, ८ । (ञ) ऋ० १, ४४, ६ । (ट) ऋ० १, ९६, ७ । (ठ) ऋ० ५, १५, २ । (ड) ऋ० १०, २०, ३ । (ढ) १, १६४, १ ।

(क)अर्चिभिः(ख) केश्ययं(१) त्वग्निर्विद्युद्भिश्चैव(२) मध्यमः ।
असौ तु(ग) रश्मिभिः(३) केशी तेनैनामाह(४) केशिनः(घ) ॥ ९३ ॥
एतेषां तु पृथक्त्वेन त्रयाणां केशिनामिह ।
संस्तूयन्ते प्रक्रियासु त्रयः केशिन इत्यृचि(५) ॥ ९४ ॥
न चैवैषां(६) प्रसूतिर्वा विभूतिः स्थानजन्म वा(७) ।
निर्वक्तुं शक्यमेतैर्हि कृत्स्नं व्याप्तमिदं जगत् ॥ ९५ ॥
(ङ)वैश्वानरं(८) श्रितो ह्यग्निरग्निं(९) वैश्वानरः श्रितः ।
अनयो(च)र्जातवेदाश्च तथैव(छ) जातवेदसि(१०) ॥ ९६ ॥

---

(१) ऋचिभिः केश्ययं इति ख०, अर्चिभिः केश्ययमिति ङ० ।

(२) श्चैव इति ग० घ० ।

(३) कुरश्मिभिरिति ख० ।

(४) तेन नानाह इति घ० ।

(५) प्रक्रियानि कृतवन्त हवींषि च इति घ० ।

(६) नत्वेवैषां इति घ० ।

(७) विभूतिस्थानजन्म वा इति ख० ग० ।

(८) वैश्वानरे इति क० घ० ।

(९) अग्नौ इति क० घ० ।

(१०) तु तथैनौ जातवेदसौ इति क० ख० ग० ङ० ।

---

(क) ऋ० ५, ७९, ८ । (ख) ऋ० १०, १०२, ६ । (ग) ऋ० १, १९, ८ । (घ) ऋ० १, १६४, ४४ । (ङ) ऋ० ७, ५, ५, । (च) ऋ० १, ७७, ५ । (छ) ऋ० ६, १६, ४२ ।

साल्लोक्याच्चैकजातत्वाद्[१] व्याप्तिमत्त्वात्तु तैजसः[२] ।
तस्य तस्येह[३] देवत्वं दृश्यन्ते ते [४]पृथक्[५] स्तुताः ॥९७॥
यस्त्वाग्नेयमिति ब्रूमः[६] सूक्तभाक् तत्र[७] पार्थिवः ।
जातवेदस्यमित्युक्ते सूक्तेऽस्मिन् मध्यमः स्मृतः[८] ॥ ९८ ॥
वैश्वानरीयमिति तु यत्र ब्रूमो[९]ऽथ वा क्वचित् ।
सूर्यसूक्तस्य[१०] भाक्तत्र ज्ञेयो वैश्वानरस्तुतौ[११] ॥ ९९ ॥
सूर्यप्रस्तुतावग्नी तु दृष्टौ[१२] पार्थिवमध्यमौ ।
एतेषामेव लोकानां त्रयाणामध्वरेऽध्वरे ॥ १०० ॥
[क]रोहात्प्रत्यवरोहेण चिकीर्षन्नाग्निमाहृतम्[१३] ।

(१) एकजन्यात्वेति क० घ० ।
(२) व्याप्तिमत्त्वाच्च तेजसः इति क० घ० ।
(३) यस्य यस्येह इति क० घ०, तस्य तस्य ह इति ख० ङ० ।
(४) च इति ख० ग० ।
(५) स्तुतिषु इति घ० ।
(६) यत्राग्नेयमिति ब्रूम इति ग०, यस्त्वाग्नेयमिति घ० ।
(७) सूक्तं भक्त्या तु इति क० घ० ।
(८) सूक्तं भक्त्या तु मध्यमः इति घ० ।
(९) इत्युक्ते यद्ब्रूयामो इति क० घ० ।
(१०) सूर्यः सूक्तस्येति ग० ।
(११) सूर्यभक्तस्य सूर्यस्य ज्ञेयो वैश्वानरो दिवि इति क० घ० ।
(१२) दृष्टौ इति ख०, दृश्यौ इति क० घ० ।
(१३) चिकीर्षन्नग्निमाहृतमिति ग० ।

(क) ऋ० १, ५६, २ ।

प्रत्यं[१] वैश्वानरीयेण सूक्तेन प्रतिपद्यते ॥ १०१ ॥
ततस्तु मध्यमस्थाना देवतास्त्वनुशंसति[२] ।
इन्द्रश्च[३] मरुतश्चैव सोचियेऽग्नि[४]मिमं पुनः ॥ १०२ ॥
तथैत[५]द्दृक्रमेतेषां विभूतिस्थानसम्भवम् ।
यथा[६] च देवदेवस्य तत्र तत्रेह दृश्यते ॥ १०३ ॥
यच्च पृथिवीस्थानं पार्थिवं चाग्निमिश्रितम्[७] ।
तत्सर्वमानुपूर्व्येण[८] कथ्यमानं निबोधत ॥ १०४ ॥
जातवेदाः[क] श्रितो ह्य[९]ग्नि[ख]मग्निं वैश्वानरः[ग] श्रितः[घ] ।

---

(१) प्रात्यमिति ग० ।

(२) मध्यमे स्थानाद्देवतास्त्वनुशंससि इति ख०, देवतास्तत्र शंसति इति घ० ।

(३) वज्रश्चेति ग० ।

(४) सोचियाग्निमिति घ० ।

(५) यथैतदिति ख० ग० घ० ।

(६) तथा इति ख० ग० ङ० ।

(७) वाग्निमिश्रितमिति क० घ०, वाग्निवमिश्रितमिति ङ० ।

(८) आनुपूर्व्येणेति ग० घ० ङ० ।

(९) अपि इति घ० ।

---

(क) ऋ० ३, ७७, ५ । (ख) ऋ० १, १, १ । (ग) ऋ० १, ५९, ६ । (घ) ऋ० १, ७५, ३ ।

द्रविणोदा[क]स्तथेध्म[ख]श्च श्रितश्चाग्निं[१] तनूनपात्[ग] ॥ १०५ ॥
नराशंसः[घ] श्रितश्चैन[ङ] मेन[२]मेवाश्रित[३]स्त्विलः[च] ।
बर्हिर्द्वार[छ]श्च देव्यो[ज]ऽग्नि[४]मेन[५]मेव तु संश्रिताः ॥ १०६ ॥
नक्तोषा[झ] सा च देव्यौ[६] च होतारा[ञ]वेतदाश्रयौ[७] ।
देव्य[८]स्तिस्रः श्रिताश्चैनं त्वष्टा[ट] चैवैतदाश्रयः ॥ १०७ ॥
श्रितो वनस्पति[ठ]श्चैनं[९] स्वाहाकृतय[ड] एव च ।
अश्वश्च[ढ] शकुनिश्चैव मण्डूका[ण]श्चैतदाश्रयाः[१०] ॥ १०८ ॥

---

(१) अग्निरिति घ० ।
(२) एतमेनमिति ग०, एवमेतमिति घ० ।
(३) आश्रिता इति ख० घ० पुस्तकान्तरञ्च ।
(४) देवोऽग्निमिति ख० ।
(५) एतमिति घ० ।
(६) दैव्यौ इति ङ० ।
(७) एतदाश्रितौ इति घ०, होतारौ च तदाश्रयौ इति पुस्तकान्तरं ।
(८) देव्या इति ग० ।
(९) एवमिति ख० ।
(१०) तदाश्रया इति ख० ।

---

(क) ऋ० १, १५, ७-९ । (ख) ऋ० ८, ४५, २ । (ग) ऋ० १, १८८, २ ।
(घ) ऋ० १, १४२, ३ । (ङ) ऋ० १, ९, २ । (च) ऋ० १, १२८, १ ।
(छ) ऋ० १, १३, ६ । (ज) ऋ० १, १४०, ७ । (झ) ऋ० १, १३, ७ ।
(ञ) ऋ० १०, ६५, १० । (ट) ऋ० १, ३२, २ । (ठ) ऋ० १, ९०, ८ ।
(ड) ऋ० ९, ५, ११ । (ढ) ऋ० १, ३६, ८ । (ण) ऋ० ७, १०३, ७ ।

[क]ग्रावाण[१]श्चैन[२]मघा[३][ख]श्च नराशंसस्तथा रथः[ग] ।
[घ]दुन्दुभिश्चेषुधि[ङ]श्चैव[४] हस्तघ्नो[च][५] भीशवो[६] धनुः[छ] ॥१०९॥
[ज]ज्या चैतदाश्रितेषुश्च[७] श्रिता अश्वाजनी[झ][८] च या ।
[ञ]वृषभो द्रुघण[९]श्चैल[ट][१०] मेतं पितुरुलूखलम्[११][ठ] ॥११०॥
नद्यश्चैवैनमापश्च सर्वाश्चौषधयस्तथा[१२] ।
रात्र्यश्चाग्नाय्य[ड]रण्यानिः[ढ][१३] श्रद्धे[ण]ला[त]पृथिवी[थ]तथा[१४] ॥१११॥

(१) आवग्णा इति ख०, ग्रावग्ण इति ग० ।
(२) एवमिति ख०, एतमिति घ० ।
(३) मघ्वा इति ग० ।
(४) एनमिति ग०, एतमिति ङ०, पुस्तकान्तरञ्च ।
(५) हस्तघ्नी इति पुस्तकान्तरं ।
(६) अभीशव इति पाठः सुसङ्गततया भाति ।
(७) आश्रयेषुरिति घ० ।
(८) चाश्वाजनी इति ख०, चाश्वाजनी इति घ० ।
(९) वृषभो द्रुयण इति ग०, वृषाद्द्रुघण इति घ० ।
(१०) एनमिति ग० ङ० पुस्तकान्तरञ्च, एवमिति घ० ।
(११) वृषभेद्रुघ्यणश्चैलमेषैतं पितुमुलूखलमिति ख० ।
(१२) सहेति ख०, सर्व्वा ओषधयश्च हेति ग० ङ० पुस्तकान्तरञ्च ।
(१३) रात्रिरथाग्नाय्यरण्यानी इति ख०, राव्यथामाय्यरण्यानी इति ग० ङ०, आदर्शपुस्तकमात्रे अरण्यानीति दीर्घस्वरान्तपाठोऽस्ति ।
(१४) श्रद्धा द्यावा पृथिव्यथेति क० घ० ।

(क) ऋ० १, ८९, ४ । (ख) ऋ० ९, ४३, ५ । (ग) ऋ० १, ३०, १८ ।
(घ) ऋ० १, २८, ५ । (ङ) ऋ० ६, ७५, ५ । (च) ऋ० ६, ७५, १४ ।
(छ) ऋ० ६, ७५, २ । (ज) ऋ० ६, ७५, ३ । (झ) ऋ० ५, ६२, ७ ।
(ञ) ऋ० १, ३१, ५ । (ट) ऋ० १०, ९५ १८ । (ठ) ऋ० १, २८, ६ ।
(ड) ऋ० ५, ४६, ८ । (ढ) ऋ० १०, १४६, २ । (ण) ७, ३२, १४ ।
(त) ऋ० १, १३, ९ । (थ) ऋ० १, २२, १३ ।

भजते चैन[१] मेवोर्व्वी[क][२] द्वन्द्वभूते च रोदसी[ख][३] ।
मुषलोलूखले[ग] चैनं[४] हविर्धाने च ये स्तुते ॥११२॥
जोष्ट्री[५]चोर्जाहुती[घ] चैनं[६] शुतुद्र्या[७][ङ] च विपाट्[च] सह !
यौ च देवौ शुनासीरौ[छ][८] तौ चाग्नी चैतदाश्रयौ[९] ॥११३॥
लोके वै[१०] यत्त्व वै प्रातः सवनं[ज] क्रियते मखे[झ] ।
वसन्त[ञ]शरदौ[ट] षड्ढू स्तोमो[ठ]ऽनुष्टुवथो[ड] त्रिवृत्[ढ][११] ॥११४॥

(१) चैवमिति ख०, भजेते चैतमिति क० घ०, भजेते चैनमिति ङ० ।
(२) एवार्त्ती[ण] इति क० ग० घ० ।
(३) तु रोदशी इति ख० ।
(४) एवेति क० घ० ।
(५) जोष्ट्रा इति ख० ।
(६) चोर्जाहुतिश्चैनमिति ख०, एवेति क० घ० ।
(७) सुतुद्र्या इति ख० ।
(८) सुनासीरौ इति ख० ।
(९) चैवाथैतदाश्रयौ इति क० घ०, चाग्नि चैतदास्तथेति ख० ।
(१०) लोकोऽयमिति क० ग० घ० ङ० ।
(११) च यत्त्रिवृत् इति क० घ० ।

(क) ऋ० १, १४, ९ । (ख) ऋ० १, १६७, ५ । (ग) ऋ० १, २८, ६ ।
(घ) ऋ० ८, ३९, ४ । (ङ) ऋ० ३, ३३, १ । (च) ऋ० ३, ३३, १ ।
(छ) ऋ० ४, ५७, ५ । (ज) ऋ० १, १६, ५ । (झ) ऋ० १, ६, ८ ।
(ञ) ऋ० १०, ९०, ६ । (ट) ऋ० १, ७२, ३ । (ठ) ऋ० १, ८, १० ।
(ड) ऋ० १, २८, ६ । (ढ) ऋ० १, १४०, २ । (ण) ऋ० ६, ७५, ४ ।

गायत्री[क] चैकविंशश्च यच्च साम[ख]रथन्तरम्[१][ग]।
साध्याः[घ] साम च वैराजमाप्य[ङ]श्च वसुभिः[च][२] सह ॥११५॥
इन्द्रेण च मरुद्भिश्च सोमेन वरुणेन च।
पर्ज्जन्येनर्त्तुभिश्चैव विष्णुना चास्य संस्तवः ॥११६॥
अश्विवाग्नेस्तु पूष्णा च[३] सामाज्यं वरुणेन च।
देवता वाहनश्चैव[४] हविषां[५] वहनं तथा ॥११७॥
देवतामर्थतत्त्वज्ञो मन्त्रैः संस्तूयते[६]हविः[७]।
असन्ततस्या[८]पि सतो[९] हविरेकं[१०] निरूप्यते ॥११८॥
कर्म दृष्टे च[११] यत् किञ्चिद्[१२] विषये[१३] परिवर्त्तते।

(१) साध्यं रथन्तरमिति ख०।
(२) आप्यश्चवसुभिरिति ख०, आप्याश्च वसुभिरिति ग० घ० ङ०।
(३) पुंश्चेति ख०, पुंसा चेति ङ० पुस्तकान्तरञ्च॥
(४) अपि इति क० घ०।
(५) हविषः इति क० घ०।
(६) संयोजयेदिति क० घ०।
(७) विदुरिति ख०।
(८) असंस्कृतस्येति क० घ०।
(९) विततः इति घ०।
(१०) एषा इति ख०, एवमिति ग०।
(११) तु इति क० घ०, कर्म्म दृष्टेष्विति ङ० पुस्तकान्तरञ्च।
(१२) यः कश्चिदिति क० घ०।
(१३) विकार्थे इति ख०, विषये इति ङ०।

(क) ऋ० १०, १४, १६। (ख) ऋ० १,६२,२। (ग) ऋ० १०,१८२,१
(घ) ऋ० १, १६४,५०। (ङ) ऋ० १, १०५, ९। (च) ऋ० १, ५८, ३

इत्युक्तोऽयं गणः सर्वः पृथिव्यन्याश्रयो महान् ॥११९॥
यस्त्वेन्द्रो[१] मध्यमस्थानो गणः सोऽयमतः परः।
विमानानि च दिव्यानि गन्धर्वाप्सरसां[२] तथा ॥१२०॥
इन्द्राश्रयस्तु[३] पर्जन्यो रुद्रो वायुर्बृहस्पतिः।
वरुणः कश्च मृत्युश्च देवश्च ब्रह्मणस्पतिः[क] ॥१२१॥
मन्यु[४]श्च विश्वकर्मा च मित्रः क्षेत्रपति[५]र्यमः।
तार्क्ष्यो वास्तोष्पतिश्चैव सरस्वांश्चैवमत्र तु[६] ॥१२२॥
अपानपाद्दधिक्रा[ख]श्च[७] सुपर्णो[ग]ऽथ पुरूरवाः[घ]।
ऋतो[ङ]ऽसुनीति[च]र्वेन[छ]श्च[८] तथेन्दुश्च स्त्रियो दितिः[ज][९] ॥१२३॥

---

(१) त्वेन्द्रः इति क० घ०।

(२) गन्धर्वाप्सरसः इति क० घ०, गणश्चाप्सरसामिति ग० ङ० पुस्तकान्तरञ्च।

(३) इन्द्राश्च यस्तु इति क० घ०।

(४) मनुरिति ख० ङ०।

(५) मित्रक्षेत्रपतिरिति ख० ग०।

(६) तत्र तु इति क० घ०।

(७) अपान्नपाद्दधिक्रा चेति क० घ० ङ०, अपान्नपाद्दधिकाश्चेति ग०।

(८) वैनश्चेति घ०।

(९) तस्यैतस्याश्रये दिति इति क० घ०, तथ्यदुश्च स्त्रियो दितिरिति ङ० पुस्तकान्तरञ्च।

---

(क) ऋ० २, २४, २। (ख) ऋ० ४, ३८, ६। (ग) ऋ० १, ३५, ७।
(घ) ऋ० १, ३१, ४। (ङ) ऋ० ८, ६०, ५। (च) ऋ० १०, १२, ४।
(छ) ऋ० १, ८३, ५। (ज) ऋ० ७, १५, १२।

त्वष्टा[क] च सविता चैव वातो[ख](१)वाचस्पतिस्तथा।
धाता प्रजापतिश्चैव अथर्वाण[ग]श्च(२) ये स्तुताः ॥१२४॥
भृगव[घ]श्चैवमग्निश्च(३) तथेला[ङ] चैव याः स्तुताः।
विधातेन्दुरहिर्बुध्न्यः [च]सोमोऽद्रिरथ चन्द्रमाः ॥१२५॥
विश्वानर[छ]श्च वै(४)देव ऋभूणां[ज] संस्तुतो(५) गणः ॥१२६॥
मरुतोऽङ्गिरसश्चैव पितरश्चर्तुभिः सह।
राका[झ](६)वाक्[ञ]सरमा[ट]प्या[ठ]श्च(७)भृगवो[ड]ऽप्सा सरस्वती॥१२७॥
यम्यु[ढ](८)र्वम्री[ढ]सिनीवाली[ण] पथ्या[त] स्वस्ति[थ]रुषाः कुहूः।

(१) वाचः इति क० घ०।
(२) वाचस्पत्यावेति ख०।
(३) ग्नेनश्चैवैवमापश्चेति ख० घ०।
(४) चैवेति ख० पुस्तकान्तरञ्च।
(५) ब्रह्माणं चाश्रितः इति क० घ०।
(६) एका इति क०।
(७) वाकसरमाप्यश्चेति ङ०।
(८) यभ्युरिति ख०।

---

(क) ऋ० १, ३२, २। (ख) ऋ० १, २८, ६। (ग) ऋ० ६, ११, २। (घ) ऋ० १, ५८, ६। (ङ) ऋ० १, १३, ९। (च) ऋ० १, १८६, ५। (छ) ऋ० १, १८६, १। (ज) ऋ० ४, ३५, २। (झ) ऋ० २, ३२, ८। (ञ) ऋ० १, १६४, ४५। (ट) ऋ० १, ६२, ३। (ठ) ऋ० १, १०५, ९। (ड) ऋ० १, ५८, ६। (ढ) ऋ० १, १०१, ४। (ण) ऋ० २, ३२, ८। (त) ऋ० ३, ५४, ५। (थ) ऋ० ३, ८९, ६।

पृथिव्यनुमतिर्धेनु: सीते(क)ला(ख)ख्या तथैव(१) गौ: ।
गौरी(ग) च रोदसी(घ) चैव इन्द्राण्या(२)स्तेष वै पति: ॥१२८॥
छन्दस्त्रिष्टुप् च पङ्क्ति(ङ)श्च लोकानां मध्यमश्च य: ।
एतेष्वेवाश्रयो(३)विद्यात्सवनं(च) मध्यमश्च यत् ॥१२९॥
ऋतु च ग्रीष्महेमन्तौ यच्च सामोच्यते(४) बृहत् ।
शक्करीषु(छ) च यद्गीतं नाम्ना तत्साम शाक्करम् ॥१३०॥

इति बृहद्देवतायां प्रथमोऽध्याय: ।



(१) श्रीर्लाक्षेला दितिस्त्वेति क० घ०, सीतालाक्षा तथैवेति ख० ग० ।
(२) चैवेन्द्रायण्या: इति ख० ।
(३) एकस्यैवाश्रय: इति क० घ०, श्वाश्रये इति ख० पुस्तकान्तरञ्च ।
(४) साम्योच्यते इति ख० ।

(क) ऋ० ४, ५७, ७ । (ख) ऋ० १, १२८, ७ । (ग) ऋ० ९,१२,३ ।
(घ) ऋ० १, १६७,५ । (ङ) ऋ० १०, ११७, ८ । (च) ऋ० १, १६, ५ ।
(छ) ऋ० ७, ३३, ४ ।

## अथ द्वितीयोऽध्यायः।

आह चास्यैव तौ[१] सोमा[क]वाग्नयौ शाकटायनः[२]।
यस्य[३] पञ्चदशो नाम्ना सङ्ख्या[४] त्रिणवस्य[५] यः ॥१॥
संस्तुत[६]स्यैव पूष्णा च विष्णुना वरुणेन च।
सोमवाय्वग्निकुत्सैश्च ब्रह्मणस्पतिनैव च ॥२॥
बृहस्पतिना च तथा[७] बृहत[ख]स्यैव वै पतिः[८]।
कासुचित्[९] केचिदित्याहुर्निपाताः[ग] स्तुतिषु स्तुताः[१०] ॥३॥

(१) द्वौ इति ख० ग० ङ०।

(२) भाकटायनः इति क० घ०।

(३) यस्येति ख०।

(४) सङ्ख्यायामिति क० घ०।

(५) त्रिनवः इति दन्त्यनकारयुक्तपाठो विशुद्धः।

(६) संस्तृतः इति क० घ०।

(७) स बृहस्पतिना चैव इति ख०, बृहतस्पतिना चैवेति ग० ङ०।

(८) नाम्ना यश्चापि पर्वतः(घ) इति ख० ग० ङ० पुस्तकान्तरञ्च।

(९) कश्चित्स इति क० घ०।

(१०) निपातः स्तुतिषु स्तुतः इति क० घ०।

(क) ऋ० १, ८, १०। (ख) ऋ० १, १३०, ९। (ग) ऋ० ४,५५,३।
(घ) ऋ० १, १७, ७।

मित्र[क]श्च[१] स्तूयते[२]देवो वरुणेन सहाः[३][ख]सकृत् ।
रुद्रेण सोमः पूष्णा[४] च पुनः पूषा च वायुना ॥४॥
वातेनैव तु[५] पर्जन्यो लक्ष्यते वै क्वचित्[६] क्वचित् ।
ऋक्ष्व[ग]र्द्धर्चेषु[७] पादेषु सूक्तेष्वेषु तु[८] कृत्स्नशः ॥५॥
रसादानं[९] तु कर्म्मास्य वृत्रस्य[१०][घ] च निबर्हणं ।
स्तुतेः प्रभुत्वं सर्वस्य बलस्य[ङ] निखिला कृतिः ॥६॥
इत्यैन्द्रो मध्यमस्थानो गणः सम्यगुदाहृतः ।
यः परस्तु[११]गणः सौर्य्यो द्युस्थानस्तं निबोधत ॥७॥

(१) तु इति ख० ङ० पुस्तकान्तरञ्च ।

(२) श्रूयते इति ग० ङ० पुस्तकान्तरञ्च ।

(३) सर्व्वेषु आदर्शपुस्तकेषु, सहा इति निर्व्विसर्गपाठो वर्त्तते ।

(४) पूषा इति ख० ।

(५) चैव इति ख० ङ० । चेति ग० ।

(६) अन्यत्र वै इति ग० ङ० पुस्तकान्तरञ्च ।

(७) अर्द्धर्चेष्वृक्षु इति क० घ०, ऋक्ष्वर्द्धेषु इति ख०, ऋक्ष्वर्द्धर्चेषु इति ग० ।

(८) सूक्तेष्वेव त्विति क० घ०, सूक्तेष्वेतेषु इति पुस्तकान्तरं ।

(९) रसदानमिति क० घ० ।

(१०) पुत्रस्येति क० घ० ।

(११) यश्च यस्तु इति क० ।

(क) ऋ० १, २३, ६ । (ख) ऋ० ८, २०, २० । (ग) ऋ० ५,५६,३ ।
(घ) ऋ० १, ३२, १० । (ङ) ऋ० १, ३७, १२ ।

तस्य मुख्यतमौ देवावश्विनौ[१] सूर्य्यमाश्रितौ।
वृषाकपायि[२][क] सूर्य्या[ख]षाः[ग] सूर्य्यस्यैव तु पत्नयः[३] ॥८॥
अमुतोर्वाङ्[४] निवर्त्तन्ते प्रतिलोमास्तदाश्रयाः[५]।
पुरोदया[६]त्तामुषसं सूर्य्यां मध्यन्दिने स्थिते ॥९॥
वृषाकपायिं[२] सूर्य्यास्तकाल आहुः[७] स्तुतिष्वृचि[८]।
तस्या[९]ग्रये[१०]सरण्यूश्च[घ][११] भगः[ङ] पूषा वृषाकपिः[च][१२] ॥१०॥

(१) त्वश्विनौ इति क० घ०।
(२) सर्व्वेषु आदर्शपुस्तकेषु वृषाकपायी इति दीर्घस्वरान्तपाठो वर्त्तते।
(३) पत्नय इति क०, यत्नतः इति ख०।
(४) अमुतोर्वागिति ङ० पुस्तकान्तरञ्च। अमुतो वागितिपाठः अशुद्धः।
(५) पत्नोदये इति क० घ०।
(६) पुरोदये इति क० घ०।
(७) सूर्य्यस्य तामेवाहुरिति क० घ०, सूर्य्यस्य तानेवाहुरिति ख०।
(८) तु निम्नुचि इति क०, निमुचि इति ख०।
(९) अस्येति क० घ०।
(१०) आग्नमे इति ग०।
(११) तस्याप्युश्चेति ख०।
(१२) बृहस्पतिरिति ख०।

---

(क) ऋ० १०, ८६, १३। (ख) ऋ० ५, ७३, ५। (ग) ऋ० १, ४६, १।
(घ) ऋ० १०, १७, २। (ङ) ऋ० १, २४, ४। (च) ऋ० १०, ८६, १।

यमो वैश्वानरो(क) विष्णुर्वरुणश्चैकपादजः(१) ।
पृथिवी च समुद्राश्च देवाः सप्तर्षयश्च ये ॥ ११॥
आदित्याः केशिसाध्याश्च सविता(२) वसुभिर्मनुः ।
दध्यङ्(ख)ऽथर्वा(ग) विश्वे(घ) च वाजिनो(ङ)(३)देवपत्नयः ॥ १२॥
असौ तृतीयं सवनं(४) लोकः साम च(५) रैवतं ।
वैरूपश्चैव वर्षाश्च(६) शिशिरोऽथ ऋतुस्तथा(७) ॥ १३॥
त्रयस्त्रिंशश्च(८)यः स्तोमः(च)(९) कृत्या सप्तदशश्च यः ।
छन्दश्च जगतीनाम्ना(१०) तथाऽतिच्छन्दसश्च(११)याः(१२) ॥ १४॥

---

(१) अथ पातृजः इति क० घ० ।
(२) आदित्यँपूगः साध्याश्च साङ्ख्चेति क० घ० ।
(३) वाजिनौ इति ख० ।
(४) तृतीयसवनमिति क० घ० ।
(५) तृतीयः सर्व्वेन लोमसामा चेति ख० ।
(६) वैरूप्यश्चैव मर्षाश्चेति ख० ।
(७) शिशिरश्चैव यात्वृतू इति क० घ० ।
(८) त्रयस्त्रियश्चेति ख० ।
(९) यत् स्तोमं इति क० घ० ।
(१०) चैवेति क० घ० ।
(११) अतिश्छन्दसाश्चेति ग०, अतिच्छन्दसाश्चेति क० ख० घ० ।
(१२) यदिति क० घ० ।

---

(क) ऋ० १, ५९, ६ । (ख) ऋ० १, ८०, १६ । (ग) ऋ० १, ८०, १६ । (घ) ऋ० १, ३, ७-९ । (ङ) ऋ० १, ११, २ । (च) ऋ० १, ८, १० ।

पौरुषश्चाङ्करस्यैतत्सर्वमेव तु[1] पौरुषं।
एतस्यैव तु विज्ञेया देवाः संस्तविका[2]स्त्रयः[3] ॥१५॥
षण्मासस्यैव वायुश्च पञ्चमं वत्सरं[4] विदुः।
केचित्तु निर्वपत्य[5]स्य सौर्य्यं वैश्वानरं हविः॥१६॥
सौर्य्यवैश्वानरीयं हि तत् सूक्तमिव[6] दृश्यते।
अजगर्द्धर्षोऽथ[7]वा पादो दृष्टो वा यदि वा तृचः॥१७॥
अनेन तु प्रवादेन[8] दृष्टा मूर्द्धन्वतास्तुतिः।
सूर्य्यवैश्वानराग्नीना[9]मैकात्म्यमिह दृश्यते॥१८॥
हरणं तु रसस्यैतत्कर्मणाऽमुष्य[10]रश्मिभिः।
यानीमानि च पश्यन्ति सर्वभूतानि तेजसा[11] ॥१९॥

---

(१) हेति ख०।
(२) संस्तापिकाः इति क० घ०।
(३) तये इति ख०।
(४) यच संवत्सरमिति क० घ०, पञ्चसंवत्सरमिति ख०।
(५) निर्व्वपते चेति क० घ०।
(६) न सूक्तमिहेति क० घ०।
(७) अगर्द्धर्षश्चेति क० घ०, अवर्द्धर्षाथेति ख०।
(८) प्रयोगेणेति क० घ०, प्रपादेनेति ख०।
(९) सौर्य्यवैश्वानराग्नीनामिति क० ख० घ० पुस्तकान्तरञ्च।
(१०) रश्मिभिश्चास्य कर्म्माऽमुष्य चेति ग० ङ० पुस्तकान्तरञ्च।
(११) येन नातिविजानन्ति सूर्य्यभूतानि चक्षुषेति ख० ग० ङ० पुस्तकान्तरञ्च।

विभागमिममेतेषां विभूतिस्थानसम्भवं।
सम्यग्विज्ञाय[१] मन्त्रेषु तन्तु[२] कर्मसु योजयेत् ॥२०॥
अध्यापयन्नधीयानो मन्त्र[३] ञ्चैवानुकीर्तयन्।
स्थानं सालोक्यं सायुज्यमेतेषामधिगच्छति[४] ॥२१॥
अग्नेस्तु यानि सूक्तानि[५] पञ्च नामानि कारवः[क]।
षड्विंशतिस्तथेन्द्रस्य प्राहुः सूर्यस्य सप्त च ॥२२॥
तेषां पृथङ्निर्वचनमेकैकस्येह कर्मजं।
उच्यमानं यथान्यायं शृणुध्वमखिलं मया ॥२३॥
जातो यदग्रे भूतानामग्रणीरध्वरे च यत्।
नाम्ना सन्नयते वाङ्गं[६] स्तुतोऽग्निरिति[७] सूरिभिः[ख] ॥२४॥
द्रविणं[ग] धनं बलं वापि प्रायच्छद्येन[८] कर्मणा।

(१) विज्ञानन्निति क० घ०।
(२) तांस्तेति क० घ०।
(३) सत्सु इति क० घ०।
(४) एव गच्छतीति ख० ग० ङ० पुस्तकान्तरञ्च।
(५) सूक्तेषु इति क० घ०।
(६) सन्निस्ठते चाग्रे इति क० घ०।
(७) इत्येति क० घ०।
(८) चैव प्रयच्छेद्येनेति क० घ०।

(क) ऋ० १, ११, ६। (ख) ऋ० १,५१,१५। (ग) ऋ० १,६४,१४।

तत्कर्म दृष्ट्वा[१]कुत्स[क]स्तु प्राहैनं द्रविणोदसं[ख] ॥२५॥
अयं तनूनपाद्[ग]ग्निरसौ हि तननात्तनुः[२][घ]।
ततस्तु मध्यमो यज्ञे ह्याग्नेऽयं[३] मध्यमात्ततः[४] ॥२६॥
अनन्तरं[५] प्रजामाज्यमपा[ङ]दिति रूपपर्वः।
नपाद्मुष्य[६]चैवायमग्निस्तेन तनूनपात् ॥२७॥
पृथक्त्वेन समत्वेन[७] यज्ञे यच्छास्यते[८] नृभिः।
स्तुवन्त्याग्नीषु तेनेमं नराशंसं[च]स्तु कारवः[९][छ] ॥२८॥
पुनाति[१०] यदिदं विश्वमेवाग्निः[११] पार्थिवोऽथ च[१२]।

(१) कृत्वेति क० घ०।
(२) तपसा तनूरिति ख० घ०।
(३) ह्याग्नेऽयमिति ख०।
(४) अग्ने यश्चैव मध्यमादिति क० घ०।
(५) अनन्तरामिति ङ० पुस्तकान्तरञ्च।
(६) अमुष्येति ख०।
(७) समासैश्चेति ख० ग० ङ० पुस्तकान्तरञ्च।
(८) वास्यते इति क० ख०।
(९) सूरयः इति क० घ०।
(१०) जानाति इति ख०।
(११) विश्वमेवाग्निरिति ख०।
(१२) पार्थिवोऽप्यथेति ख०।

(क) ऋ० १, १०६, ६। (ख) ऋ० ६, ८८, ३। (ग) १, १८८, २। (घ) ऋ० १, १२०, ११। (ङ) ऋ० १, १४३, १। (च) ऋ० १, १३, ३। (छ) ऋ० १, ११, ६।

वैखानसर्षिभि[१] स्तेन पवमान[क] इति स्तुतः[२] ॥२९॥
भूतानि वेदयज्जातो जातवेदाऽथ[ख]कथ्यते[३]।
यद्वैष[४]जातविद्यो[५]ऽभूदित्वा[६]जातोऽधिवेत्ति[७] वा ॥३०॥
विद्यते सर्वभूतैर्हि[८] यद्वा जातः[९] पुनः पुनः।
तेनैष मध्यभागिन्द्रो[ग][१०] जातवेदा इति स्तुतः ॥३१॥
पुनाति यदिदं विश्वं सोमोऽग्निः[घ] पार्थिवोऽप्सु सन्।
वैखानसाश्रितैस्तस्मात्पवमान इति स्तुतः[११] ॥३२॥

---

(१) वैखानस ऋषिरिति ख०।
(२) पुनातीत्यादि पवमान इति स्तुतः इत्यन्तपाठः क० घ० पुस्तकयोर्नास्ति।
(३) जातैर्यद्वाऽथ विद्यते इति क० घ०।
(४) यद्वेष इति क० घ०।
(५) जातं वेदः इति क० घ० पुस्तकान्तरच्च।
(६) वित्तमिति ख० ग० ङ०।
(७) अथ वेत्तीति क० घ०।
(८) सर्व्वमेतद्धीति क० घ०।
(९) जातामिति क० घ०।
(१०) मध्यभागेन्द्र इति ख० ग०।
(११) एष श्लोकः ख० ग० ङ० पुस्तकेषु पुस्तकान्तरे च न विद्यते।

---

(क) ऋ० ८, १०१, १४। (ख) ऋ० १, ७७, ५। (ग) ऋ० १, २, ५। (घ) ऋ० १, १, २।

अग्निष्ठ एष(१) यस्तु द्यौन्(२)व्याप्यैको ह्योषि तिष्ठति ।
तेनैनमृषयोऽर्वञ्चः(३) कर्मणा वायु(क)मब्रुवन् ॥ २ ३ ॥
द्यौर्णौमान्यावृणोत्येको(४)मूर्त्तेन तु रसेन यत् ।
तयैनं वरुणं(ख) प्राह्वा स्तुतिष्वाहुः कपश्यवः(५) ॥ २ ४ ॥
अरोदीद(६)न्तरिक्षे यद्विद्युद्वृष्टिं ददन्नृणां(७) ।
चतुर्भिर्ऋषिभिस्तेन रुद्र(ग) इत्यभिसंस्तुतः(८) ॥ २ ५ ॥
चतुर्विधानां भूतानां प्राणो भूत्वा व्यवस्थितः ।
इष्टे चैवास्य सर्व्वस्य तेनेन्द्र इति स स्तुतः(९) ॥ २ ६ ॥
इरां(घ) दृणाति(१०) यत्काले मरुद्भिः सहितोऽम्बरे ।

---

(१) अग्निस्थैवेति क० घ० ।
(२) यत्तन्वा इति क०, यस्तु द्यौगिति ख० ङ०, यन्तन्वा इति घ० ।
(३) अर्वञ्चो इति ख० ग० ङ० पुस्तकान्तरञ्च ।
(४) द्यौनिमानाद्वयोर्लोकानिति क० घ० ।
(५) तु कारवः इति क० घ० ।
(६) रोदस्यग्निति क० घ० ।
(७) विद्युद्वृष्टिरदानृणामिति क० घ० ।
(८) अभिधीयते इति क० घ० ।
(९) एष श्लोकः क० घ० पुस्तकयोर्नास्ति ।
(१०) इरा ददातीति क० घ० ।

---

(क) ऋ० ५, ४१, ६ । (ख) ऋ० १, २, ७ । (ग) ऋ० १, ४३, ३ ।
(घ) ऋ० ५, ८३, ४ ।

रवेण महता युक्तस्तेनेन्द्रमृषयोऽब्रुवन् ॥ ३७॥
यदिमां प्राजयत्ये(१)को रवेणाम्बरजेन गां।
कालेऽचिरोर्वैश्र्यस्पर्शी(२)तेन पर्जन्य(क)माहतुः ॥ ३८॥
तर्पयत्येष यल्लोकान् जन्यो जनहितश्च यत्।
परो(३)जेता जनयिता यदात्रेयस्तुतो(४)जगौ(५) ॥ ३९॥
बृहन्तौ पाति यल्लोकावेष द्वौ मध्यमोत्तमौ।
बृहता(६)कर्म्मणा तेन(७) बृहस्पति(ख) रितीडितः(८) ॥ ४०॥
ब्रह्म वाक् ब्रह्म सत्यञ्च ब्रह्म सर्व्वमिदं जगत्।
पातारं ब्रह्मणस्तेन ग्रौनहोत्रः स्तुवन् जगौ ॥ ४१॥
अपां(ग)(९) चितिभ्यो विदधद्दृतुष्वविशत् चितौ(१०)।

(१) प्राजयतीति क० घ०।
(२) चार्षी इति क० घ०।
(३) पुरः इति ख०।
(४) आत्रेयस्तत इति ख० ग०।
(५) एष श्लोकः क० घ० पुस्तकयोर्न दृश्यते।
(६) बृहन्तीति ख०।
(७) चैवेति क० घ०।
(८) बृहतश्चैव वै पतिरिति क० घ०।
(९) अन्तमिति ग०।
(१०) ब्रह्मवागित्यादि अविशत् चितौ इत्यन्तपाठः क० घ० पुस्तकयोर्नदृश्यते।

(क) ऋ० ५, ५३, ६। (ख) ऋ० १, ६२, ३। (ग) ऋ० ३, ४९, ४।

ददाति यदि मह्यं चे तृतीयम्बरजं पुनः[१] ।
तेनैनमाह चेत्रस्य वामदेवः[क][२]स्तुवन् पतिं ॥४२॥
मनसेमन्तु यं दृश्यं[३] मध्यमं लोकमाश्रितं ।
गंसत्[ख] सत्येन सत्ये[ग] वै स[४] एव स्तुतवानृतं[५][घ] ॥४३॥
रवेणाम्बरसैः चितैः[६]स्थितो व्योम्न्येष मायया ।
ऋतस्य श्लोक[ङ] इत्येष पुनस्त्वैनं ततोऽब्रवीत् ॥४४॥
वास्तु[च] प्रयच्छंल्लोकस्य मध्यमस्य तु पाति यत्[७] ।
तेन वास्तोष्पतिं प्राह चतुर्भिरिममौर्वशः ॥४५॥
वाचा वेदा ह्यधीयन्ते वाचा छन्दांसि तच्च ह ।
अथो[छ] वाक् सर्व्वमेवेदं तेन वाचस्पतिः स्तुतः[८] ॥४६॥

---

(१) एतच्छ्लोकार्द्धं ग० ङ० पुस्तकयोर्न विद्यते ।
(२) याकादेवेति क० घ० ।
(३) मनसेममिमं दृश्यमिति क० घ०, मनसेयं वभादृश्यमिति ख०, मनसेमन्तु यद्दृश्यमिति ग० ।
(४) य इति ङ० पुस्तकान्तरञ्च ।
(५) ऋषिरिति क० घ० ।
(६) रसं चितौ रवेणार्ष्णौ इति क० घ० ।
(७) पातितः इति क० घ० ।
(८) वाचा वेदा ह्यधीयन्ते इत्यादि तेन वाचस्पतिः स्तुत इत्यन्तं क० घ०, पुस्तकयोर्न विद्यते ।

---

(क) ऋ० ४, ३९, १८ । (ख) ऋ० ६, २३, ५ । (ग) ऋ० ८, १०६, ६ ।
(घ) ऋ० १, ४१, ४ । (ङ) ऋ० १, १६०, ४ । (च) ऋ० ८, १५, ५ ।
(छ) ऋ० १, २८, ६ ।

न कुत[(१)]श्चैव[(२)] यद्दीनो वृत्वा[(क)] तिष्ठति मध्यमः ।
राहूगण ऋषिस्तेन प्राहैनं गौतमो[(३)] दितिं[(ख)] ॥४७॥
प्रजाभ्यस्त्वेष यच्छन्न एष वीरः शिवः सुखः[(४)] ।
हिरण्यगर्भं[(ग)] स्तेनैनमृषिरर्षंतु[(५)]वाचकम् ॥४८॥
इह प्रजाः प्रयच्छेति[(६)] सङ्गृहीता[(७)] प्रयाति[(८)] च ।
ऋषिर्विवस्वतः पुत्त्रं तेनाहैनं पुन[(९)] र्यमं[(घ)] ॥४९॥
मित्रीकृत्य जना विश्वे यदिमं[(१०)] पर्य्युपासते ।
मित्र[(ङ)] इत्याह तेनैनं विश्वामित्रः[(च)] स्तुवन् स्वयम् ॥५०॥
निदाघमासातिगमे यदृते नावति क्षितिम्[(११)] ।

(१) नकुनः इति ख०, न कुतः इति ङ० ।
(२) एष इति क० घ० ।
(३) गोतम इति क० घ० ।
(४) प्रजाभ्यस्त्वेव यच्छन्मंकमिच्छन्मनसा सखम् इति ख० ग० ।
(५) एव त्विति ख०, इच्छनु इति ग० ङ० पुस्तकान्तरञ्च ।
(६) प्रयच्छन् स इति ख० ग०, नियच्छद्भिरिति क० घ० ।
(७) सङ्गृहीत्वेति ग० ङ०, पुस्तकान्तरञ्च ।
(८) सङ्गृहीताह पानि इति घ० ।
(९) यमः इति क० घ० ।
(१०) मैत्रं कृत्वैजंना विश्वे यदेते इति क० घ०, यदिमे इति ख० ।
(११) यदि सेनावबीक्षितमिति क० घ०, यदतेना च निक्षति इति ख० ।

(क) ऋ० १०, ९०, १ । (ख) ऋ० ४, २, ११ । (ग) ऋ० १०, १२१, १ ।
(घ) ऋ० १, ७३, १० । (ङ) ऋ० १, २३, ६ । (च) ऋ० ३, ५२, ९ ।

विश्वस्य जनयन् कर्म्म विश्वकर्म्मै[क]व तेन सः[१] ॥५ १॥
सरांसि घृतवन्त्यस्य सन्ति लोकेषु यत्त्रिषु।
सरस्वन्त[ख]मिति प्राह वाचं प्राहुः सरस्वतीम्[ग][२] ॥५ २॥
प्राणभृतस्तु भूतेषु यद्वितत्येह[३] तिष्ठति।
तेनैनं वेन[घ]माहर्षिर्वेनो[ङ]नामेह[४] भार्गवः ॥५ ३॥
सहजे मासि मास्येनमभिमत्य[५]ततो व्रजन्[६]।
तेनैनं मन्यु[च]रित्याह मन्युरेव तु तापसः ॥५ ४॥
यदन्तकाले भूतानामेक[७] एव नयत्यसून्।
तेनासुनीति[छ]रुक्तोऽयं स्तुवता श्रुतबन्धुना ॥५ ५॥
निदाघमासातिगमे जन्म मध्ये भवत्यपां[८]।
नपात[ज]माह तेनैनमृषिर्गृत्समदः[झ]स्तुवन्[९] ॥५ ६॥

---

(१) त्विति क॰ घ॰।

(२) इतीमन्तु ब्रूतो दीर्घतमौर्वशौ इति क॰ घ॰।

(३) यद्वेनत्येष्विति ग॰, यद्वेनलेन्द्विति ङ॰ पुस्तकान्तरञ्च।

(४) आहार्चन् वेनोऽन्यमेहेति क॰ घ॰।

(५) अभिवत्येति ख॰, अभिपत्येति ग॰।

(६) मासि मासीमामभितप्य तपोऽग्रजः इति क॰ घ॰।

(७) एष इति क॰ घ॰।

(८) मध्येऽस्य यत्त्वपामिति क॰ घ॰।

(९) त्वपामिति क॰ घ॰।

---

(क) ऋ॰ ८, ९८, २। (ख) ऋ॰ १, १६४, ५२। (ग) ऋ॰ ६, ६१, २।
(घ) ऋ॰ ९, २१, ५। (ङ) ऋ॰ १, ८३, ५। (च) ऋ॰ २,२४,१४।
(छ) ऋ॰ १०, १२, ४। (ज) ऋ॰ २, ३५, १४। (झ) ऋ॰ २,१९,८।

अपा[१]मम्बरगर्भौघमादधत्[२]सोऽष्टमासिकम्।
यत्क्रन्दत्य[३] सन्मध्ये दधिक्रेति तदोच्यते[४] ॥ ५७ ॥
मासेन सम्भृतं गर्भं नवमेनाथ मासिकम्[५]।
स्वयं क्रन्दन् दधात्युर्व्यां धातेत्यृग्भिः स[६] गीयते ॥ ५८ ॥
स्तीर्णेऽन्तरिक्षे क्षिपति यदा तूर्णं चरत्यसौ[७]।
अरिष्टनेमिस्तार्क्ष्य[क]र्षिस्तार्क्ष्यं तेनेन[८]मुक्तवान् ॥ ५९ ॥
त्वम्[ख] व्योमसुदयं याति क्रन्दन् भा[९]द्विसृजन्नपः।
पुरूरवस[ग]माहैनं स्ववाक्येनोरु[घ]वासिनी[१०] ॥ ६० ॥

(१) वृष्ट्यामिति क० घ०।
(२) आहरदिति क० घ०।
(३) यत्क्रन्दते इति क० घ०।
(४) दधिक्रास्तेन कथ्यते इति ख० ग० ङ० पुस्तकान्तरञ्च।
(५) अष्टमासिकमिति क० घ०।
(६) तु इति क० घ०।
(७) तूर्णं क्षिपं वज्रसखा यद्विपातीह धन्विनीति क० घ०, तूर्णं क्षिप्रं त्वज्रसखो यद्वियति पश्यतीति ख०, करोत्यसौ इति ङ० पुस्तकान्तरञ्च।
(८) एवमिति ख० ग० ङ० पुस्तकान्तरञ्च।
(९) क्रन्दभादिति ग०।
(१०) स्ववाक्यैवरुवाशिनीति क० घ० :

(क) ऋ० १, ८९, ६। (ख) ऋ० १, १७३, ९। (ग) ऋ० १, ३१, ४।
(घ) ऋ० ११, १३, ७।

यस्तु प्राच्या वयं नेति[१] घोषेण महता हतः[२] ।
येमं चितिभ्यो विदधद्यस्तुंश्वविग्रत् चितौ[३] ॥६१॥
तेन मृत्युमिमं सन्तं स्तौति मृत्युरिति स्वयं[४] ।
नाम्ना सङ्कुसुको[५] नाम यमपुत्रो जघन्यजः[६] ॥६२॥
संवर्तयंस्तमः सूर्य्या[७] दुषसश्च प्रवर्तयन् ।
दिवाकरः प्रसौत्येकः[८] सविता तेन कर्म्मणा ॥६३॥
उदितो भासयल्लोका[९] निमांश्चैष स्वरश्मिभिः[१०] ।
स्वयं वसिष्ठस्तेनैनमृषिराह स्तुवन् भगम्[११](क) ॥६४॥

---

(१) नैतीति क॰ घ॰ ।
(२) मृधे इति क॰, मृतः इति ख॰, मृधमिति घ॰ ।
(३) एतच्छ्लोकार्द्धं ग॰ ङ॰ पुस्तकयोर्नास्ति । च्यवच्चितिभ्यो विरजत् यस्तु+श्वविश्च च्चितौ इति ख॰, अविवच्चितौ इति क॰ घ॰ ।
(४) इतीश्वरमिति क॰ घ॰ ।
(५) सङ्कुसुमः इति क॰ ।
(६) जघन्यसः इति ख॰, जघन्यकः इति ङ॰ ।
(७) सं वर्त्तयंस्तमो सूर्यौ इति क॰ घ॰, संवर्त्त्यं तमः सूर्य्यादिति ख॰ ग॰ ङ॰ ।
(८) दिवा चरन् प्रसूत्येकः इति क॰ घ॰ ।
(९) भाति यल्लोकानिति क॰ घ॰ ।
(१०) चैकश्च रश्मिभिरिति ख॰ ङ॰ पुस्तकान्तरञ्च ।
(११) स्तुवन्नगमिति ग॰ ।

---

(क) ऋ॰ १, १४, ३।

पुष्यन् चितिं[१] पोषयति प्रणुदन् रश्मिभिस्तमः[२] ।
तेनैनमस्तौत् पूषेति भरद्वाजस्तु पञ्चभिः ॥ ६५ ॥
त्रीणि भान्ति रजांस्यस्य यत्पदानि तु तेजसा[३] ।
तेन मेधातिथिः प्राह विष्णु[क]मेनं[४] त्रिविक्रमम् ॥ ६६ ॥
हृत्वा सायं पृथग्याति[५] भूतेभ्यस्तमसोऽत्यये ।
प्रकाशं किरणैः कुर्वंस्तेनैनं केशिनं[ख] विदुः ॥ ६७ ॥
यत्प्रत्येकैकशस्त्वेनं[६] यन्मन्यन्ते पृथङ्नराः ।
विश्वे[ग] विश्वानर[७][घ]स्तेन कर्मणा स्तुतिषु स्तुतः ॥ ६८ ॥
वृषे[ङ]व कपिलो[८][च] भूत्वा यन्नाकमधिरोहति ।
वृषाकपि[छ]रसौ तेन विश्वस्मादिन्द्र उत्तरः[ज]।
रश्मिभिः कम्पयन्नेति वृषा वर्षिष्ठ[झ] एव सः ॥ ६९ ॥

---

(१) उद्यन् जगदिति क० घ० ।
(२) ततः इति ख० ।
(३) तेजसः इति क० घ० ।
(४) एतमिति क० ख० घ० ङ० ।
(५) सौर्य्यं पृथक् तेऽमी इति क० घ० ।
(६) मां प्रत्येकैकशस्त्वेवेति क० घ० ।
(७) वैश्वानरः (ञ) इति क० घ० ।
(८) वृषैव कपिल इति क० घ०, वृषैककपिल इति ख० ग० ।

---

(क) ऋ० ३, ५४, १४ । (ख) ऋ० १, १०, ३ । (ग) ऋ० १, ३, ७–९ ।
(घ) ऋ० १, १८६, १ । (ङ) ऋ० १, ५९, ६ । (च) ऋ० १, ७, ८ ।
(छ) ऋ० १०, २७, १६ । (ज) ऋ० १०, ८६, १ । (झ) ऋ० ४, १८, ९ ।
(ञ) ऋ० १, ३७, ६ ।

सायाङ्ककाले भूतानि स्वापयन्नस्तमेति यत् ।
वृषाकपि[क]रितो[1] वा स्यादिति मन्त्रेषु दृश्यते ॥७०॥
त्रिषु धन्वे[ख]ति[2] चैन्द्रेण प्रत्युक्तो वारिषाकपे[3] ।
विष्णातेर्विशतेर्वा स्याद्वेवेष्टेर्व्याप्तिकर्म्मणः ।
विष्णुर्निरुच्यते वातः सर्व्वं सर्व्वान्तरश्च सः[4] ॥ ७१ ॥
पञ्च षड्विंशतिश्चैव यानि नामानि सप्त च ।
सम्यगग्नीन्द्रसूर्य्याणां तान्युक्तानि यथाक्रमम् ॥ ७२ ॥
नैपातिकानां नाम्नां तु प्रागुक्तैर्नामलक्षणैः ।
सम्पन्नानां पृथक्त्वेन परिसङ्ख्या न विद्यते ॥ ७३ ॥
पार्थिवी[ग] मध्यमा[घ] दिव्या वागपि त्रिविधा तु या ।
तस्याः सूक्तानि नामानि यथास्थानं निबोधत ॥ ७४ ॥
इत्स्तन्तु भजते सूक्तमेता[5]नद्यः स्तुता[6]भुवि ।

---

(१) यतः इति पुस्तकान्तरं ।
(२) धात्वेतीति ग० त्रिवधन्वेतीति ङ० ।
(३) वृषाकपे(क) इति ख० ।
(४) रश्मिभिः कम्पयन्नेतीत्यादि सर्व्वं सर्व्वान्तरश्च स इत्यन्तपाठः क० घ० पुस्तकयोर्न्नैलभ्यते ।
(५) स्त्रेषा इति क० घ०, एषा इति ख० ग० ।
(६) तदेति क० घ० ।

---

(क) ऋ० १०, २७, १६ । (ख) ऋ० १, ३८, ७ । (ग) ऋ० ८, २५, ६ । (घ) ऋ० ६, २५, १ । (ङ) ऋ० १०, ८६, २०—२२ ।

यं वै वेनं[१] भजन्त्यापो[२] यदा[३] चौषधयः सदा[४] ॥ ७५ ॥
अरण्यानी[क] च रात्री[ख] च श्रद्धा[ग] घोषाः[५][घ] सरस्वती।
पृथिवी चैव नामैषा भूत्वा[ङ]द्या च भजन्ति च[६] ॥ ७६ ॥
अग्नायी[च]नामतोऽप्येषा[७] भूत्वाग्नेयेषु[८] केषुचित्।
स्तुता निपात[छ]मात्रेण तत्र तत्रेह दृश्यते ॥ ७७ ॥
मध्ये सत्यदिति[ज]र्वाक्च[९] भूत्वा चैषा सरस्वती।
समग्रं भजते सूक्तं त्रिभिरेव तु नामभिः ॥ ७८ ॥
एषैव दुर्गा भूत्वर्चं[झ] कृत्वा[१०] स्यात् सूक्तभागिनी[११]।

---

(१) यदा चैनमिति क॰ ख॰ घ॰, यस्तु वेनमिति ग॰।
(२) भवन्त्यापः इति ख॰।
(३) तदेति क॰ घ॰।
(४) तथेति क॰ घ॰।
(५) चैवेति क॰ ख॰ घ॰।
(६) भूत्वा या भजते तृचीति क॰, व्याभजते तृचीति घ॰।
(७) अग्नायीत्या च नामैवेति क॰ घ॰।
(८) भूत्वाग्नेयीष्विति क॰ घ॰।
(९) वाक्यमिति क॰ घ॰, मध्यसत्यदितिर्वाक्चेति ख॰।
(१०) कृत्वेति ङ॰ पुस्तकान्तरञ्च।
(११) एषैव दुर्गा भूत्वर्चमिति श्लोकार्द्धं क॰ घ॰ पुस्तकयोर्न विद्यते।

---

(क) ऋ॰ १०,१४६,४। (ख) ऋ॰ १,११३,१। (ग) ऋ॰ ७,३२,१४।
(घ) ऋ॰ १, ४६, १। (ङ) ऋ॰ १०,१६२,५। (च) ऋ॰ ५, ४६, ८।
(छ) ऋ॰ ४, ५५, ३। (ज) ऋ॰ १, ४३, २। (झ) ऋ॰ ७, ६६, ११।

तन्नामानि च[1] मिन्द्राणी सरमा[क]रोमशो[ख]र्वशी[ग] ॥७९॥
भवत्यथ्या[घ]सिनीवाली[२](ङ) राका[च] चानुमतिः[३](छ) कुहूः ।
गौर्धेनुर्देवपत्न्योऽन्या[४] पथ्या स्वस्त्यथ[५] रोदसी ।
नैपातिकानि खल्भाञ्जि[६] येषां नामानि कानिचित् ॥८०॥
यदा तु वाग्भवत्येषा[७] सूर्य्याऽमुं लोकमाश्रिता ।
तदा सूक्तमुषा[८](ज) भूत्वा सूर्य्या[झ] च भजतेऽखिलम् ॥८१॥
वृषाकपाय्यृचं[ञ] भूत्वा सरण्यू[ट]र्दं च ते भुवम्[९] ।

---

(१) सूक्तार्धार्गीयमिति क० घ० । सूक्तार्धार्गीयमितिपाठो विशुद्धः ।
(२) ऋचक्वग्र्या(ठ)सिनीवालीति क० घ०, भवक्वग्न्या सिनीवालीति ख०, भवत्यग्र्या सिनीवालीति ग० ।
(३) राकोमानुमतिरिति क०, राकोमानुमितिरिति घ०, राका चानुमितिरिति पुस्तकान्तरम् ।
(४) गोरीगौर्धेनुपत्न्योऽन्या इति क० घ०, देवपत्न्योम्रा इति ङ० पुस्तकान्तरञ्च ।
(५) स्वस्ति चेति ख०,स्वस्तिचेति ग० ङ० पुस्तकान्तरञ्च ।
(६) नैपातिकान् पृथग्भाञ्जीति क० ।
(७) भजत्येवेति क० घ० ।
(८) सूक्तमुखेति ख० ग०, तथा सूक्तमुखेति ङ० पुस्तकान्तरञ्च ।
(९) त्येव तदृचमिति क० घ०, ते भुवमिति पुस्तकान्तरम् ।

---

(क) ऋ० १, ६२, ३ । (ख) ऋ० १, १२६, ७ । (ग) ऋ० ५, ४१, १९ ।
(घ) ऋ० ३, ५४, ५ । (ङ) ऋ० ११, ३२, ८ । (च) ऋ० ११, ३२, ८ ।
(छ) ऋ० १०, ५९, ६ । (ज) ऋ० १, १८१, ६ । (झ) ४, ४४, १ ।
(ञ) ऋ० ७, ६६, ११ । (ट) ऋ० १०, १७, २ । (ठ) ऋ० ७,८७,४ ।

निपातमात्रं भजते द्यविश्च[१] पृथिवी सती ॥ ८२ ॥
सूर्य्यामिव[२] सतीमेतां गौरीं वाचं सरस्वतीम्।
पश्यामो वैश्वदेवेषु निपातेनैव केवला:[३] ॥ ८३ ॥
घोषा[क] गोधा[ख] विश्ववारा[ग] पालोपनिषवन्निषत्[४]।
ब्रह्मजाया[घ] जुहूर्[ङ]नामागस्त्यस्य[५][च] स्वसाऽदितिः[छ] ॥ ८४ ॥
इन्द्राणी चेन्द्रमाता[६] च सरमा[ज] रोमशो[झ]र्व्वशी[ञ]।
लोपामुद्रा[ट] च नद्यश्च यमी[ठ] नारी च शाश्वती[७][ड] ॥ ८५ ॥
श्रीर्लक्ष्मीः सार्पराज्ञी[८] वाक् श्रद्धा मेधा च दक्षिणा।
रात्री सूर्य्या[ढ] च सावित्री ब्रह्मवादिन्य ईरिताः ॥ ८६ ॥

---

(१) द्यपित्तु इति क० घ०, द्युवश्चेति ग०।
(२) पृथिवी त्विति क० घ०।
(३) केवलामिति क० घ०।
(४) पालोपनिषन्निषत् इति क० ख० घ० ङ०।
(५) छन्दोऽनुरोधात् नाम अगस्त्यस्येति पाठः समीचीनः।
(६) चन्द्रमातेति ख०।
(७) शश्वतीति क० घ०, तथैव चेति ख०।
(८) सार्व्वराज्ञेति ख०।

---

(क) ऋ० १०, ४०, ५। (ख) ऋ० ८, ६९, ९। (ग) ऋ० ३, ४, ३। (घ) ऋ० १०, १०९, ३। (ङ) ऋ० १, ५८, ४। (च) १०, ६०, ६। (छ) ऋ० १, ४१, २। (ज) ऋ० १, ६२, ३। (झ) ऋ० १, १२६, ७। (ञ) ऋ० ५, ४२, १९। (ट) ऋ० १, १७९, ४। (ठ) ऋ० १०, १०, ९। (ड) ८, १, ३४। (ढ) ऋ० ४, ४४, १।

नवकः प्रथमस्त्वासां[1] वर्ग[2] स्तुष्टाव देवताः।
ऋषिभिर्देवताभिश्च समूदे[3]मध्यमो गणः॥ ८७॥
आत्मनो भाववृत्तानि जगौ वर्गस्तथोत्तमः।
उत्तमस्य तु वर्गस्य य ऋषिः सैव[4] देवता[5]॥ ८८॥
आत्मानमस्तौद्वर्गस्तु देवतां यस्तथोत्तमः[6]।
तस्मादात्मस्तवेषु स्याद्य ऋषि. सैव[7] देवता॥ ८९॥
संवादेष्वाह वाक्यं यः स तु तस्मिन् भवेदृषिः[8]।
यस्तेनोच्येत वाक्येन देवता तत्र[9] सा भवेत्॥ ९०॥
उच्चावचेषु चार्थेषु निपाताः समुदाहृताः।
कर्मोपसंग्रहणार्थे च[10] क्वचिच्चौपम्यकारणात्॥ ९१॥
ऊनानां पूरणार्थावा[11] पादानामपरे क्वचित्।

---

(१) तासामिति ख०।
(२) वर्गाः इति क० घ०।
(३) समूह्रे इति क०, समुद्रे इति ख०।
(४) ऋषिस्सैव चेति घ०।
(५) आत्मनो भाववृत्तानीत्यादि य ऋषिः सैव देवता इत्यन्तपाठः क० घ० पुस्तकयोर्न विद्यते।
(६) देवता चोत्तमस्तु यः इति क० घ०।
(७) आत्मस्तवेष्वेवं भवेदृष्टेवेति क० घ०।
(८) भवत्यृषिरिति क० घ०।
(९) तेष्विति क० घ०।
(१०) कर्मोपसंग्रहार्थेष्विति क० घ०।
(११) पूरणार्थेष्विति क० घ०।

मिताक्षरेषु ग्रन्थेषु पूरणार्थास्त्वनर्थकाः[१] ॥९२॥
कमीमिद्विति[२]विज्ञेया ये त्वनेकार्थकाश्च ते[३] ।
इव न चिन्नु चत्वार[४] उपमार्था भवन्त्यमी[५] ॥९३॥
उपमार्थं[६] नकारस्तु क्वचिदेव निपात्यते ।
मिताक्षरेषु ग्रन्थेषु प्रतिषेधस्त्वनेकशः[७] ॥९४॥
इयन्त[८] इति सङ्ख्यानं निपातानां न विद्यते ।
प्रयोजनवशा ह्येते[९] निपात्यन्ते पदे पदे ॥९५॥
उपसर्गास्तु विज्ञेयाः क्रियायोगेषु[१०] विंशतिः ।
विशेषयन्ति ते त्वर्थां[११]न्नामाख्यातविभक्तिभिः[१२] ॥९६॥

---

(१) पूरणार्थं त्वनर्थकाः इति क० घ० ।
(२) चामिमिद्वतीति ख० ।
(३) त्वन्ये सार्थकाः स्मृता इति क० घ० ।
(४) इवोनचिन्नुचत्वार इति ग० । इवेनचिन्नुचत्वार इति ङ० ।
(५) भवन्ति ते इति ख० ग० ङ० ।
(६) उपमार्थे इति ग० ङ० ।
(७) त्वनकपशः इति ख० ग० ङ० ।
(८) इयन्तु इति ख० ।
(९) वशात् प्रकरणस्यैते इति ग० ङ० । वशाः प्रकरणस्यैते इति ख० ।
(१०) क्रियायोगेनेति ख० ग० ङ० ।
(११) ते त्वर्थमिति ग० ङ० । ह्यर्थानिति घ० ।
(१२) विभक्तितः इति घ० । विभक्तिषु इति ख० ग० ङ० ।

(१)(अनु[क]अ[ख]इत्त[ग]रित्येतानाचार्य्यः शाकटायनः ।
उपसर्गाः क्रियायोगान्मेने तेन चयोऽधिकाः ॥९७॥
चीण्येव लोके लिङ्गानि पुमान् स्त्र्यथ नपुंसकम् ।
नामसूक्तप्रयोगेषु वाच्यं प्रकरणं तथा ॥९८॥
तेषान्तु नामभिर्लिङ्गैर्ग्रहणं सर्वनामभिः ।
ज्ञाताज्ञातस्य सदृशो गृहीतस्य पुनर्ग्रहः ॥९९॥
पादसूक्तच्चवर्गर्धर्चनामान्यन्यानि यानि च ।
सर्वं नामानि चैवाङ्गरन्ये चैवं यथा कथा ॥१००॥
प्रधानमर्थः शब्दो हि तद्गुणायत्त इष्यते ।
तस्मान्नामान्यथोपायः शब्दानर्थवशं नयेत् ॥१०१॥
अतिरिक्तं पदं त्याज्यं हीनं वाक्ये निवेशयेत् ।
विप्रकृष्टञ्च सन्दध्यादानुपूर्वीञ्च कल्पयेत् ॥१०२॥
लिङ्गं धातुं विभक्तिञ्च सन्नयेत् तत्र तत्र च ।
यद्यत्स्याच्छान्दसं वाक्यं कुर्य्यात् तत्तत्तु लौकिकम् ॥१०३॥
यावतामेव धातूनां लिङ्गं रूढ़िगतं भवेत् ।
अर्थश्चाप्यभिधेयश्च तावद्भिर्गुणविग्रहः ॥१०४॥
धातूपसर्गावयवगुणशब्दाद्धातुजम् ।
वह्वेकधातुजं वापि यदनिर्वाच्यलक्षणम् ॥१०५॥
धातुजं धातुजाज्जातं समस्तार्थजमेव वा ।

---

(१) ९६ सङ्ख्यकश्लोकात् १२७ सङ्ख्यकश्लोकपर्य्यन्तं श्लोकाः क० घ० चिह्नि-तयोः पुस्तकयोर्नोपलभ्यन्ते । एते ख० ग० ङ० चिह्नितेषु पुस्तकेषूपलभ्यन्ते ।

---

(क) ऋ० १, ९, ४ । (ख) ऋ० १, ५५, ५ । (ग) ऋ० १, ५४, १ ।

वाक्यजं व्यतिकीर्णञ्च निर्वाच्यं पञ्चधा पदम् ॥१०६॥
द्विगुर्द्वन्द्वोऽव्ययीभावः कर्मधारय एव च।
पञ्चमस्तु बहुव्रीहिः षष्ठस्तत्पुरुषः स्मृतः ॥१०७॥
विग्रहान्निर्वचः कार्यं समासेष्वपि तद्धिते।
प्रविभज्यैव निर्ब्रूयाद्दण्डार्हो दण्ड्य इत्यपि ॥१०८॥
भार्य्या रूपवती चास्य रूपवद्भार्य्य इत्यपि।
इन्द्रस्य सोमस्येत्येवमिन्द्रासोमौ निदर्शनम् ॥१०९॥
शब्दरूपं पदार्थस्य व्युत्पत्तिः प्रकृतिर्गुणः।
सर्व्वमेतदनेकार्थं दृष्टानवगमे गुणाः ॥११०॥
सामान्यवाचिनः शब्दा विशेषे स्थापिताः क्वचित्।
पलायने यथावृत्ति कोनुमर्या इतीष्यते ॥१११॥
विशेषवाचिनस्त्वन्ये सामान्ये स्थापिताः क्वचित्।
हिमेनाग्निमिति मन्त्रे हिमशब्दो निदर्शनम् ॥११२॥
पदमेकं समादाय द्विधा कृत्वा निरुक्तवान्।
पुरुषादः[क] पदं यास्को वृचे वृचे इति त्वृचि ॥११३॥
अनेकं सत्तथा चान्यदेकमेव निरुक्तवान्।
अरुणो मासकृच्मन्त्रे मासकृद्विग्रहेण तु ॥११४॥
पदव्यवायेऽपि पदे एकीकृत्य निरुक्तवान्।
गर्भं निधानमित्येते न आमय[ख] इति त्वृचि ॥११५॥
पदजातिरविज्ञाता त्वः पदार्थः सिनामनि।

---

(क) ऋ० १०, २७, २२। (ख) ऋ० १,२२,१६।

स्वरानवगमो धाथि[क] वमेनेत्यृचि दर्शितः ॥११६॥
शुनःशेफं[ख] नराशंसं[ग] शाव्यानः पृथिवीति च ।
निरुक्ततेति प्रभृतिस्वर्थादासीत् क्रमो यथा ॥११७॥
वर्णस्य वर्णयोर्लोपो बहूनां व्यञ्जनस्य च ।
अचाणीतिकपिर्नाभाद्[घ]नोयामित्यथासु च ॥११८॥
अर्थात् पदं स्वाभिधेयं पदाद्वाक्यार्थनिर्णयः ।
पदसङ्घातजं वाक्यं वर्णसङ्घातजं पदम् ॥११९॥
अर्थात् प्रकरणाल्लिङ्गादौचित्याद्देशकालतः ।
मन्त्रेष्वर्थविवेकः स्यादितरेष्विति च स्थितिः ॥१२०॥
इति नामान्वयोपायैर्नैरुक्तेयो यतेत सः ।
जिज्ञासुर्ब्रह्मणो रूपमपि दुष्कृत् परं व्रजेत् ॥१२१॥
यथेदमग्रे नैवासीदसदप्यथ वापि सत् ।
जाते यथेदं सर्वं तद्भावस्तत्त्वं वदन्ति तु ॥१२२॥
भावप्रधानमाख्यातं षड्विकारा भवन्ति ते ।
जन्मास्तित्वं परीणामो वृद्धिर्ह्रासं विनाशनम् ॥१२३॥
एतेषामेव षण्णान्तु येऽन्ये भावविकारजाः ।
ते यथावाक्यमप्यूह्याः सामर्थ्यान्मन्त्रवित्तमैः ॥१२४॥
देवानाञ्च पितॄणाञ्च नमस्कारैस्तथैव च ।
अथ व्यस्तं समस्तं वा शृणु व्याहृतिदैवतम् ॥१२५॥
व्याहृतीनां समस्तानां दैवतन्तु प्रजापतिः ।

---

(क) ऋ० १, १५८, ३ । (ख) ऋ० ५, २, ७ । (ग) ऋ० १, १३, ३ ।
(घ) ऋ० ८, ७, ६ ।

व्यस्तानामयमग्निश्च वायुः सूर्य्यश्च देवताः ॥१२६॥
वाग्देवत्योऽथ वाय्यैन्द्रो यदि वा परमेष्ठिनः।
ओङ्कारो वैश्वदेवो वा ब्राह्मो दैवः क एव वा) ॥१२७॥
भावप्रधानमाख्यातं षट्प्रकारा भवन्ति तु।
जन्माखिलं परीणामो वृद्धिह्रानिर्विनाशनम् ॥१२८॥
एतेषामेव वर्णाः स्युरन्ये भावविकारजाः।
यथावचनमभ्यूह्याः सामर्थ्यान्मन्त्रवित्तमैः ॥१२९॥
त्रीण्येव लोके लिङ्गानि पुमान् स्त्र्यथ नपुंसकम्।
नामसूक्तप्रदेशेषु योऽयं प्रकरणं त्वनु ॥१३०॥
तेषां तु नामभिर्लिङ्गैर्यत्वणं सर्वनामभिः।
कुर्वन्नामानि वै वाङ्गरन्यदेवत्यया यथा ॥१३१॥
यथेदमग्रे नैवासीदसद्वाप्यथवापि सन्।
जज्ञे यथेदं सर्वन्तु भावहृत्तं प्रचक्षते ॥१३२॥
वाग्देवत्योऽथ वाय्यैन्द्रो यदि वा परमेष्ठिनः।
ओङ्कारो वैश्वदेवो वा ब्राह्मो दैवः क एव वा ॥१३३॥
व्याहृतीनां समस्तानां दैवतं तु प्रजापतिः।
व्यस्तानामयमग्निश्च वायुः सूर्य्यश्च देवताः ॥१३४॥

इति शौनकाचार्य्यकृतौ बृहद्देवतायामुपोद्घातप्रकरणम्।

---

आग्नेयं प्रथमं सूक्तं मधुच्छन्दस आदितः[१]।
अग्नेयास्त्वन्योऽन्यदेवत्या[२] सूक्ताः सप्तात उत्तराः ॥१२५॥
वायव्यः प्रथमस्त्वेषामैन्द्रवायव उत्तरः।
मैत्रावरुण आश्विन्य[३] ऐन्द्रो यः पञ्चमस्तृचः[४] ॥१२६॥
[५]नान्यः षष्ठादिश्वलिङ्गो गायत्रोऽन्त्यस्तु यस्तृचः[६]।
बहुदैवतमन्यत्तु[७] वैश्वदेवेषु गद्यते ॥१२७॥
लुप्तेष्वत्रा[८]र्यातं[क] गोतमेऽथ त्रजिम्यनि[ख]।
अवत्सारे[ग] पद[घ]क्षेपे[९] अचौ[१०] दीर्घतमस्तृ[ङ]चौ[११] ॥१२८॥

---

(१) आर्भकमिति ग० ङ०। घ० पुस्तकोद्धृतपाठश्च।
(२) सर्वेऽन्यदेवत्या इति ग० ङ०। घ० ङ०।
(३) मैत्रावरुणोऽश्विन इति ख० ग० ङ०। घ० ङ०।
(४) त्रिन्द्रोवो वैश्वदेवत इति ख०। अप्यैन्द्रोऽतो वैश्वदेवश्च इति ग० ङ०।
(५) तन्नामा विश्वलिङ्गो वेति ग० ङ०। घ० ङ०।
(६) गायत्रोऽस्त्यपरस्तृचः इति क० घ० च०।
(७) बहुदेवतमन्यत्स्विति क० घ०। बहुदैवत्यमन्यास्त्विति ग०।
(८) लुप्तेऽथ वात्स्ये इति ग० ङ०। घ० ङ०।
(९) पदक्षेपे इति ग०। अवत्सारपरक्षेपे इति ख०।
(१०) पुत्रे इति ख० ग० ङ०। घ० ङ०।
(११) तत् एष्यौ इति ख०।

---

(क) ऋ० १, ५१, ७। (ख) ऋ० ८, ४६, १०। (ग) ऋ० ५, ४४, १०।
(घ) ऋ० १०, १००, ५। (ङ) ऋ० १, १५८, ६।

वसिष्ठे नाभानेदिष्ठे[क] गये[ख] मेधातिथौ मनौ[ग] ।
कक्षीवति[(घ)१] विहव्ये[ङ] च बहुष्वन्येषु चर्षिषु[२] ॥१३९॥
अगस्त्ये बृहदुक्थे[च] च विश्वामित्रे च[३] गाथिनि[छ] ।
दृश्यन्ते विप्रवादास्तु[४] तासु तासु स्तुतिष्विह ॥१४०॥
बह्वीनां सन्निपातस्तु यस्मिन्मन्त्रे प्रदृश्यते ।
आचार्यौ यास्कशाण्डिल्यौ वैश्वदेवं तमाहतुः[५] ॥२४१॥
पादं वा यदि वार्धर्चमृचं वा सूक्तमेव वा ।
वैश्वदेवं वदेत्सर्वं यत्किञ्चिद्बहुदैवतं[६] ॥१४२॥
ऋषिभिर्देवताः सर्वा विश्वाभिः स्तुतिभिः स्तुताः ।
संज्ञा तु विश्वमित्यासां[७] सर्वावाप्तौ निपातिता[८] ॥१४३॥

---

(१) काक्षीवते इति ख० । काक्षीवते इति घ० उ० ।
(२) चर्षिषु इति ख० ग० ङ० । घ० उ० ।
(३) विश्वामित्रेऽथेति ख० ङ० । घ० उ० ।
(४) विप्रपादाश्चेति क० घ० च० ।
(५) तदाहतुरिति ग० ङ० । घ० उ० ।
(६) बहुदेवतमिति क० च० ।
(७) विश्वमित्येषेति ख० ग० ङ० । घ० उ० ।
(८) निपातितौ इति ङ० । घ० उ० ।

---

(क) ऋ० १०,६१,१८ । (ख) ऋ० ६, २, ८ । (ग) ऋ० १, ३६, १६ ।
(घ) ऋ० १, ५१, १३ । (ङ) ऋ० १, १०८, ६ । (च) ऋ० ४,२०,१० ।
(छ) ऋ० १, ८, १ ।

सारस्वतः सप्तमस्तु[१] एताः प्रउगदेवताः[२]।
अविद्यमाने जने वा प्रउगेष्वेतं भावयेत्[३] ॥१४४॥
सरस्वती तु त्रिविधा ऋक्षु सर्वासु दृश्यते स्तुता[४]।
नदीवद्देववाच्चैव तयैवमुभयं स्तुतं[५] ॥१४५॥
[६]सुरूपकृत्नु[क]मित्यैन्द्रं सप्त चान्योऽन्यतः परं।
पञ्चादृच[७] स्वधामिति मारुत्योऽनन्तरा ऋचः ॥१४६॥
एका वीळु[ख]चिदिन्द्रायं[८] मरुद्भिः सह गीयते।

(१) सारस्वतस्तु सप्तम इति ग० छ०। घ० ङ०।
(२) सारस्वतस्तु उत्तरमन्त्रा प्रउगदेवता इति ख०।
(३) अविद्यमाने इत्यादिश्लोकार्द्धं ख० ग० छ० चिह्नितपुस्तकेषु नोपलभ्यते।
(४) ऋक्षु सर्वासु सा स्तुतेति ग० छ०। घ० ङ०।
(५) नदीवद्देवतावच्च सूत्राचार्य्यस्तु शौनकः इति ख०। अत्र सूत्राचार्य्य इति ग० छ०। घ० ङ०।
(६) इतः पूर्वं ख० ग० छ०। घ० ङ० चिह्नित पुस्तकेषु नदीवन्निगमाः षट् ते सप्तमो नेत्युवाच ह। अम्बेत्याच दृषद्वत्यां चित्रइच सरस्वती। इयं शुष्मेभिरित्येतं मेने यास्कस्तु सप्तमम्। पद्योः सारस्वतस्यैतां यास्का नैघण्टुकीयके। प्राधान्याद्ववियः पश्यन् वाच एवेतरोऽब्रवीत्। इत्यधिकं पठ्यते।
(७) बचादृच इति ख० बनादृच इति घ०।
(८) एकाविद्युचिमिन्द्रोयमिति क०। एकाविद्युचिदिन्द्रायेति ख०। एकापीळुचिदिन्द्रायेति ग०। एकावाळुचिदिन्द्रायेति छ०।

(क) ऋ० १, ४, १। (ख) ऋ० १, ६, ५।

तथा एकाक्षरायास्तु अर्धर्चस्यो[(१)] द्विदेवतः ॥ १४७ ॥
मरुद्गणप्रधानोऽयं होन्द्रस्तु[(२)] विचिकित्सितः ।
मन्दू[(क)(३)] समानवर्चसौ[(४)] मन्दुनावाभवर्चसा ॥ १४८ ॥
मन्दू इति[(ख)] प्रगृह्णन्ति[(५)] येषामेव[(६)] द्विदेवतः ।
एकदैवत्यमाम्नायो विज्ञेयाध्ययनात् पदं[(७)] ॥ १४९ ॥
रोदसी[(ग)] देवपत्नीनामथर्वाङ्गिरसे[(घ)] यथा[(८)] ।
[(९)] मरुद्गणप्रधानेयमाचार्याणां स्तुतिर्मता ॥ १५० ॥
मरुद्गणप्रधानत्वादिन्द्रस्तु विचिकित्स्यते[(१०)] ।

---

(१) अर्धर्चाद्न्यो द्विदेवत इति घ० ङ० । ङ० ।
(२) हीत्थं चेति ख० ग० । घ० ङ० । मरुद्गणप्रधानो हीत्थं चेन्द्रः इति ङ० ।
(३) मन्दुः इति ख० ।
(४) समानवर्चसमिति ग० । समानवर्चसा इति घ० ।
(५) मन्दू इति प्रगृह्णन्तीति क० घ० ङ० च० ।
(६) एषमेवेति ख० । येषामेवेति ग० ङ० । घ० ङ० ।
(७) विज्ञायाध्ययनात्पदमिति ख० । विज्ञानाध्ययनात्पदमिति क० घ० ङ० ।
(८) रोदसी इत्यादि श्लोकार्द्धं क० घ० च० चिह्नितपुस्तकेषु नोपलभ्यते ।
(९) मरुद्गणेति ङ० ।
(१०) विचिकित्सितः इति ख० ग० । घ० ङ० ।

---

(क) ऋ० १, ६, ७ । (ख) ऋ० १. ६, ७ । (ग) ऋ० १, १६७, ५ ।
(घ) ऋ० १०, ९२, ११ ।

मरुद्गणं महेन्द्रस्य(१) समासं सकलं विदुः(२) ॥१५१॥
अग्निमित्यग्निदैवत्यं पादस्तस्य द्विदेवतः(३) ॥
निर्मथ्याहवनीयार्थावग्निनाग्निः(४) समिध्यते ॥१५२॥
द्वितीये द्वादशर्चे तु प्रत्यृचं देवताः स्तुताः ।
स्तूयन्ते ह्यग्निना सार्द्धं तासां नामानि मे शृणु(५) ॥१५३॥
प्रथमायां स्तुतस्त्विध्मो(क)(६) द्वितीयायां तनूनपात्(ख) ।
नराशंसं(ग) तृतीयायां चतुर्थ्यां स्तूयते त्विळः(घ) ॥१५४॥
बर्हि(ङ)रेव तु पञ्चम्यां द्वारो(च) दैव्यस्ततोऽन्यथा(७) ।
नक्तोषा सा तु सप्तम्यामष्टम्यां तु स्तुतौ(८) सह ॥१५५॥

---

(१) मरुद्गणमहेन्द्रस्येति घ० । मरुद्गणेनेहेन्द्रस्येति क० ख० घ० च० ।
(२) समासं शाकलं विदुरिति क० घ० च० ।
(३) पादस्तत्र-द्विदैवतः इति ग० ङ० । घ० ङ० ।
(४) निर्मंथ्याहवनीयार्थां अग्निनाग्निरिति क० घ० । निर्मन्थ्याहवनीयार्थेऽग्निनाग्निरिति च० ।
(५) स्तूयते देवताऽयासां नामानि शृणुते ह नः इति क० घ० च० ।
(६) समिद्धश्चेति क० घ० च० ।
(७) अन्ययेति ख०, अन्यथा इति च० ।
(८) संस्तुतौ इति ग०, स स्तुतौ इति ङ० पुस्तकान्तरश्च ।

---

(क) ऋ० १२, ४५, २ । (ख) ऋ० १, १३, २ । (ग) ऋ० १, १३, ३ ।
(घ) ऋ० १, १२८, १ । (ङ) ऋ० ३, ५३, १० । (च) ऋ० ५, ५, ५ ।

देव्या[क]विति[१] तु होतारौ नवम्यामृचि संस्तुताः।
तिस्रो देव्यो दशम्यां तु ज्ञेयस्त्वष्टे[ख]व तु स्तुतः ॥१५६॥
एकादश्यां तु सूक्तस्य स्तुतिं[२] विद्याद्वनस्पतिम्[ग]।
द्वादश्यां तु स्तुता देव्यो विद्यात्स्वाहाकृती[घ]रिह[३] ॥१५७॥
सूक्तेऽस्मिन् प्रत्यृचं यास्तु[४] देवताः परिकीर्त्तिताः।
ता एव सर्वास्वाप्रीषु द्वितीयायां[५] विकल्प्यते[६]॥१५८॥
प्रैषैः सहैव हैतानि लेकादश प्रपद्यते[७]।
यजुषः[८] प्रैषसूक्तं वा दशैतानीतराणि तु ॥१५९॥
सौत्रामणानि[९] तु त्रीणि प्राजापत्याश्वमेधिके।

---

(१) देव्याविति ख॰ ङ॰।

(२) स्तुतमिति ङ॰।

(३) देवी विद्यात्स्वाहाकृतीरितीति ग॰।

(४) प्रत्यृचे यास्त्विति क॰ घ॰ च॰।

(५) द्वितीया त्विति ख॰।

(६) विकल्प्यते इति ख॰ ग॰ च॰।

(७) प्रैषैः सहाप्रीसूक्तानि तान्येकादश सन्ति चेति ख॰ ग॰ ङ॰। सहाप्री इत्यत्र सहैवेति ख॰।

(८) यजूंषीति ख॰ ग॰ ङ॰।

(९) सौत्रामणीतीति क॰ घ॰ च॰।

---

(क) ऋ॰ १, २७, १२। (ख) ऋ॰ १, १२, २। (ग) ऋ॰ ६, ४८,१७।
(घ) ऋ॰ १, १८८, ११।

पुरुषस्य च यन्मेधे यजुःष्वेव तु तस्य तु[1] ॥१६०॥
अत्रैव प्रैषसूक्तं स्यात् यजुःष्वाद्रियेत तत्[2]।
तेषां प्रैषकृतं[3] यच्च यच्च[4] दीर्घतमा जगौ ॥१६१॥
मेधातिथं[5] यदुक्तं च चौलेवोभयवन्ति तु।
ऋषिर्गृत्समदो[क][6] यच्च वाध्र्यश्व[ख]स्तु[7] यदुच्यते ॥१६२॥
नराशंसवदृषि[ग]स्तु[8] दृष्टमेऽथ[9] यदौर्वशः।
तनूनपादगस्त्यस्तु[10] जमदग्नि[घ]स्तु[11] यज्जगौ ॥१६३॥
विश्वामित्र[ङ] ऋषिर्यच्च जगौ वै काश्यपोऽसितः[च]।
मेधातिथेस्त्वृचां[12] यास्तु प्रोक्ता द्वादश देवताः ॥१६४॥

---

(१) तानि षड़िति ख॰ ग॰ ङ॰।
(२) यजुःष्वादि येषु चेति क॰ घ॰ च॰।
(३) प्रैषगतं सूक्तमिति ग॰।
(४) यच्च तच्चेति ख॰, यत्तु तच्चेति ङ॰ पुस्तकान्तरञ्च।
(५) मेधातिथेरिति ख॰, मेधातिथाविति ग॰ ङ॰ पुस्तकान्तरञ्च।
(६) ऋषौ गृत्समदे इति ग॰ ङ॰ पुस्तकान्तरञ्च।
(७) वाध्र्यश्वे चेति ग॰ ङ॰ पुस्तकान्तरञ्च।
(८) अत्रेश्चेति ख॰ ग॰ ङ॰ पुस्तकान्तरञ्च।
(९) दशमं चेति ख॰ ग॰ ङ॰ पुस्तकान्तरञ्च।
(१०) चेति ग॰ ङ॰ पुस्तकान्तरञ्च।
(११) वामदेवश्चेति ग॰, जामदग्न्यश्चेति ङ॰ पुस्तकान्तरञ्च।
(१२) ऋचः इति ख॰ ग॰ ङ॰ पुस्तकान्तरञ्च।

---

(क) ऋ॰ २, १९, ८। (ख) ऋ॰ १०, ६९, ५। (ग) ऋ॰ १, १३९;९।
(घ) ऋ॰ ३, ५३, १५। (ङ) ऋ॰ ३, ५३, ९। (च) ऋ॰ १, ४६, १०।

सम्पद्यन्ते यथाग्नीकाः(१) सम्पदं तां निबोधत ।

इध्मो(क)यः सोऽय(२)मेवाग्निरयं होभ्रे(ख)(३) समिध्यते ।

भ्रातेवैतत्क्षतं(४) रूपं भ्रातो(ग) होभ्रः(५) समिध्यते(घ) ॥१६५॥

इति बृहद्देवतायां द्वितीयोऽध्यायः ।

---

(१) यथाग्निं ताः इति ख० ग० ङ० पुस्तकान्तरञ्च ।

(२) सर्व्वमिति ख० ग० ङ० पुस्तकान्तरञ्च ।

(३) होभ्रः इति ग० ङ० पुस्तकान्तरञ्च ।

(४) भ्रातैर्वैतस्क्षतमिति क० ग० घ० च० ।

(५) होन्भे इति ग० ङ० पुस्तकान्तरञ्च ।

(क) ऋ० ८, ४९, २ । (ख) ऋ० ७, १, १६ । (ग) ऋ० ५, ६, ५ ।
(घ) ऋ० ४, १५; ४ ।

# अथ तृतीयोऽध्यायः ।

तनूनपाद्यस्त्वेव नाम्ना सोऽप्युच्यते तनूः(१) ।
नपा(क)दिति प्रजामाहुरमृतस्य(२) च सम्भवम् ॥ १ ॥
नराशंसस्त्विहैके तु(३) होत्रभिस्त्वाहुरध्वरे(४) ।
नराः शंसन्ति सर्व्वेऽस्मिन्नासीना इति वाग्मिनः(५) ॥ २ ॥
तदाहुरग्निमेवायं(६) नराशंसोऽध्वरे त्वयम्(७) ।
नरैः शस्यत आसीनैराहुश्च ऋत्विजो नराः(८) ॥ ३ ॥
इळा त्विति कृतं रूपं ऋषिभिर्गतिकर्मणः(९) ।

---

(१) यच्छत्यसौ तनुमिति ख० ग० ङ० पुस्तकान्तरञ्च ।
(२) अमुतोऽस्येति ख० ग० ङ० पुस्तकान्तरञ्च ।
(३) नराशंसमिहैके त्विति ख० ग० ङ० पुस्तकान्तरञ्च ।
(४) अग्निमाहुरथेतरे इति ग० ङ० पुस्तकान्तरञ्च ।
(५) वाऽध्वरे इति ग० ङ० पुस्तकान्तरञ्च ।
(६) एतमेवाहुरन्येऽग्निमिति ग० ङ० पुस्तकान्तरञ्च ।
(७) स्वयमिति ख० ग० ङ० पुस्तकान्तरञ्च ।
(८) चैवर्त्विजो नरः इति ख० ग० ङ० पुस्तकान्तरञ्च ।
(९) इडत्त्विषितं कृतं रूपमीडेश्च स्तुतिकर्म्मणः इति ग० ङ० पुस्तकान्तरञ्च । इड इत्यत्र इषः, इडेश्च इत्यत्र ईड्योश्चेति ख०, स्तुतिकर्म्मणः इत्यत्र, गतिकर्म्मणश्चेति च० ।

---

(क) ऋ० १, १४२, १ ।

दुवावां[क]स्तेन चोक्ताग्निरिरिणा[ख](१)गतिकर्म्मणा(२) ॥ ४ ॥
वर्हि[ग]रेवायमग्निस्तु सर्वं हि परिवृंहितम् ।
अन्नेन यः स्तुतो(३) वाथन्निभेन परिवृह्यते(४) ॥ ५ ॥
द्वार[घ]स्तु(५) देव्यो याः प्रोक्ता विश्वेषां तास्तु यत्नतः ।
अग्नायी[ङ]मनुवर्त्तन्ते तथाग्नाय्यग्निमेव च(६) ॥ ६ ॥
अग्नौ ध्रुवं स्थितास्तास्तु(७) स्तूयन्ते चाग्निना(८) सह ।
प्राधान्यन्तासु चैवाग्नेः स्तुतिष्वथ(९) हविःषु च ॥ ७ ॥
नक्तोषा सा(१०) च ये देव्यावाग्नेय्यावेव ते स्तुते ।

---

(१) इडिनेति ग०, ईडिनेति ङ० पुस्तकान्तरञ्च ।
(२) वर्धिकर्म्मिणेति ग०, वर्धिकर्म्मणेति ङ०, बुद्धिकर्म्मणेति पुस्तकान्तरं ।
(३) यद्धुत इति ग० ङ० पुस्तकान्तरञ्च ।
(४) परिवृंहित इति ग० घ० ङ० ।
(५) द्वारस्येति ख० ग० ङ० पुस्तकान्तरञ्च ।
(६) आग्नायीमन्ववर्त्तन्त नाग्निं गाग्नाय्य एव चेति क० घ० च० ।
(७) ध्रुवास्थितत्वात्त्विति क० घ० च० ।
(८) संस्तूयन्तेऽग्निनेति ख० ग० ङ० ।
(९) स्तुतिष्वेवेति ग० ङ० पुस्तकान्तरञ्च ।
(१०) नक्तोषाऽसौ इति ख० ग० ङ० पुस्तकान्तरञ्च ।

---

(क) ऋ० ४, २, ५ । (ख) ऋ० ८, ८७, १ । (ग) ऋ० ३, ५३, १७ ।
(घ) ऋ० १, १३, ६ । (ङ) ऋ० १, २२, १२ ।

श्यामाग्नेयी[१] हि कालस्य तस्यैवोषाः[क] कलैव तु[२] ॥ ८ ॥
तम उच्छन्त्यु[ख]षा नक्ता[ग] नक्तोमां हिमबिन्दुभिः ।
अपि वा[३] व्यक्तवर्णेति नक्त् पूर्व्वां वे[घ]रिदं[४] भवेत्[५] ॥ ९ ॥
नाम्ना भवत्युषा[६]स्वैव सैषा[७] प्रागुदयाद्रवेः ।
[८]सा हि वोषा[९] भवत्यादौ मध्ये प्राप्ते तमस्वती[१०] ॥ १० ॥
देव्याविति[११] तु होतारावुभौ[१२] पार्थिवमध्यमौ ।

---

(१) भाव्याग्नेयीति ख०, श्यावाग्नेयीति ग०, श्याव्याग्नेयीति ङ० पुस्तकान्तरञ्च ।
(२) किला(ख)ऽवमे(ग)ति क० घ० च० ।
(३) अभि वेति ख० ।
(४) वेरिदमिति ख० ।
(५) तम उच्छन्त्युषेति श्लोकः क० घ० च० पुस्तकेषु न दृश्यते ।
(६) उषाः इत्यत्र उषेति पाठः संगतः ।
(७) ग्रैषेति ख० ।
(८) ख० ग० ङ० पुस्तकेषु, सा हि वोषेति श्लोकार्द्धं, नाम्ना भवत्युषास्वैवेति श्लोकार्द्धात् प्राक्, पठितं ।
(९) दोषेति क० घ० च० ।
(१०) निशीथे सा तमस्विनीति ख० ग० ङ० पुस्तकान्तरञ्च ।
(११) देव्याविनीति ख० ग० ।
(१२) अमी इति ग० ङ० पुस्तकान्तरञ्च ।

---

(क) ऋ० १, ४६, १ । (ख) ऋ० १ ३२,४ । (ग) ऋ० ३, ५४, ५ ।
(घ) ऋ० १, ४६, १ । (ङ) ऋ० १, ७३, ७ । (च) ऋ० १,७२, ९ ।

दिव्यादृग्नेस्तु[१] अग्नाते देव्यौ तेनेह जन्मना[२]॥ ११ ॥
तिस्रस्तु देव्यो याः प्रोक्तास्तिस्रस्तानेवेह सा तु वाक् ।
त्रिविधेनोच्यते नाम्ना ज्योतिःषु त्रिषु वर्त्तिनी ॥ १२ ॥
अग्निमेवानुगेला[३] तु मध्ये त्वैन्द्री[४] सरस्वती ।
अमुं श्रिताधिलोकन्तु[५] भारती भारतो ह्यसौ ॥ १३ ॥
सैषा तु त्रिविधा वै वाग्दिवि च व्योम्नि चेह च ।
व्यस्ता [६]चैव समस्ता च भजतेऽग्नीनिमानपि[७] ॥ १४ ॥
त्वष्टा तु यः सोऽयमेव [८]पार्थिवोऽग्निरिति श्रुतिः[९] ।
पार्थिवस्यास्य वर्षः स्युः कस्याण्वृक्[१०]चार्त्तवेषु च[११] ॥ १५ ॥
त्विषित[क]स्त्वष्टुतो वा स्यात् [१२]तूर्णमश्नुवतीति वा[१३] ।

---

(१) चौति ख० ग० ङ० पुस्तकान्तरञ्च ।
(२) कथ्यत इति क० ख० ङ० च० ।
(३) अनुग्नेलेति ख०, अनुसेलेति क० घ० च० ।
(४) प्राप्तेति ख० ग० ङ० पुस्तकान्तरञ्च ।
(५) श्रितविश्लोकन्त्विति क० घ० च० ।
(६) व्याप्तेति क० घ० च० ।
(७) भजतऽग्नीनिमानन्विति क० घ० च० ।
(८) ह्ययमेवेति ख० ङ० पुस्तकान्तरञ्च, यत् स्वयं प्रोक्त इति ग० ।
(९) स्तुतिरिति ख० ग० ङ० पुस्तकान्तरञ्च ।
(१०) काव्याचीदिति ख०, कस्याप्टगिति ङ० पुस्तकान्तरञ्च ।
(११) पार्थिवो वाग्राम्ने च कौत्सा त्रिष्वार्त्तवेषु चेति क० घ० च० ।
(१२) तुष्यिते वा स्यादिति ख०, त्वश्यतेर्वा स्यादिति ग० ङ० पुस्तकान्तरञ्च ।
(१३) अश्नुत एव वेति ख० ग०, वा इत्यत्र चेति ङ० पुस्तकान्तरञ्च ।

---

(क) ऋ० १०, ८४, २ ।

कर्मसु त्वरणं वेत्ति [1]तेन मामेत[2]दश्नुते ॥ १६ ॥
यः सहस्तमौजस्तु [3]रवेश्चन्द्रमुपाश्रितः[4] ।
सोऽयं[5] त्वष्टारमेवाग्निः [6]परं वन्हे च यन्मधु[7][क] ॥ १७ ॥
प्रादात्तुष्टा च [8]सुप्रीतः पुत्राय[9] यदथर्वणे[10] ।
स चाभवद्दधिचेन ब्रह्मणा वीर्यवत्तमः[11] ॥ १८ ॥
तमृषि[12]र्निषिषेधेन्द्रो [13]मैवं वोचः [14]कांचिन्मधु ।
न हि प्रोक्ते मधुन्यस्मिन् जीवन्तं त्वोत्सृजाम्यहं[15] ॥ १९ ॥

(१) कर्म्मसूत्तारणो वेतीति ग० ङ०, वेतीत्यत्र वेत्तीति ख० पुस्तकान्तरञ्च ।
(२) मामेतदिति ख० ।
(३) सहस्तमो रश्मिरिति ग० ङ० ।
(४) चन्द्रमसोश्रित इति क० घ० च० ।
(५) सोऽपीति ख० ग० ङ० पुस्तकान्तरञ्च ।
(६) अग्निमिति ग० ङ० पुस्तकान्तरञ्च ।
(७) वेदवतं मनुमिति ख०, चेह च यन्मध्विति ग०, वेद च यन्मध्विति ङ०, देव च यन्मध्विति पुस्तकान्तरं ।
(८) अपीति ख० ग० ङ० पुस्तकान्तरञ्च ।
(९) सुतायेति ख० ग० ङ० पुस्तकान्तरञ्च ।
(१०) तदथर्वणा इति ख० ग० ङ० पुस्तकान्तरञ्च ।
(११) दीप्तिमत्तरः इति ख० ग० ङ० पुस्तकान्तरञ्च ।
(१२) तं त्वृषिरिति क० घ० च० ।
(१३) निषिषिधेन्द्र इति क० घ० च० ।
(१४) मेदं वाचः इति क० घ० च० ।
(१५) मधौ ब्रह्मन् जीवनं त्वहमुत्सृजे इति क० घ० च० ।

(क) ऋ० १, ११४, १० ।

तमृषिं त्वश्विनौ देवौ विधिव[१]न्मध्वयाचतां[२] ।
स च ताभ्यां तदाचष्टे यदुवाच शचीपतिः ॥२०॥
तमभूतान्तु नासत्यावाश्वेन [३]शिरसाऽभवत् ।
मध्वाशु ग्राहय त्वं त[४]मेन्द्रस्त्वां हनिष्यति[५] ॥२१॥
आश्वेन [६]शिरसा तौतु [७]दध्यङ्ङाह यदश्विनौ[८] ।
तदास्येन्द्रोऽहरत्सन्नं [९]न्यधात्तामस्य तौ शिरः[१०] ॥२२॥
दधीच[क]स्त[११]च्छिरस्त्वाश्वं हृतं वज्रेण वज्रिणा ।
पपात सरसो मध्ये पर्वते शर्यणावति[ख] ॥२३॥
तदङ्गस्तु[१२] समुत्थाय भूतेभ्यो विविधान् वरान् ।

---

(१) विविक्ते इति ग० ङ० पुस्तकान्तरञ्च ।
(२) याचत्विति क० ख० ङ० च० ।
(३) वाश्व्येनेति ग० ङ० पुस्तकान्तरञ्च ।
(४) त्वावामिति क० ख० ध० च० ।
(५) मेन्द्रश्च त्वावधीत्ततः इति ख० ग० ङ० पुस्तकान्तरञ्च ।
(६) आश्व्येनेति ङ० पुस्तकान्तरञ्च ।
(७) ताभ्यामिति ख०, तत्त्विति क० घ० च० ।
(८) यदश्विनोरिति क० घ० च० ।
(९) तदस्येन्द्रो हरस्येहेति ख० ।
(१०) यावनधत्तामस्य यच्छिर इति ग०, नवतामस्य यच्छिरः इति ख०, चान्यनधत्तामस्य यच्छिरः ङ० पुस्तकान्तरञ्च ।
(११) दधीचश्चेति ग० ङ० पुस्तकान्तरञ्च ।
(१२) तच्छिरस्त्विति क० ख० घ० च० ।

---

(क) ऋ० १, ८४, १३ । (ख) ऋ० १, ८४, १४ ।

प्रादात्स[१]युगपर्यन्तं तास्वेवाप्सु न्यमज्जत[२] ॥२४॥
त्वष्टा रूपविकर्त्ता च योऽसौ माध्यमिके गणे।
स्तुतः स च निपातेन[३] सूक्तमस्य न विद्यते ॥२५॥
[क]वनस्पतिं तु यं प्राहुरयं सोऽग्निर्वनस्पतिः।
अयं वनानां हि पतिः पाता पालयतीति च[४] ॥२६॥
अग्निर्गृत्समदेना[ख]ऽयं वनस्पतिवदीडितः।
मन्द्रस्ये[ग]त्यस्य [५]सूक्तस्य [६]षड्वचस्य तृतीयया ॥२७॥
यूपवत्तरुवच्चैव स्तुतिर्याच [७]प्रसज्जा।
समस्तेनैव सूक्तेन [८]तृतीये सा तु मण्डले ॥२८॥
स्वाहाकृतीष्व[घ]सङ्ख्यास्तु [९]विदुषां मतयोऽभवन्।

---

(१) प्रादायेति ख० ग० ङ० पुस्तकान्तरञ्च।
(२) निमज्जतीति ख० ग० ङ० पुस्तकान्तरञ्च।
(३) निपाते चेति क० घ० च०।
(४) वेति क० घ० च०।
(५) मन्द्रस्येति चेति ग० ङ० पुस्तकान्तरञ्च।
(६) सूक्ते चेति ग०।
(७) यास्येति ग० ङ० पुस्तकान्तरञ्च।
(८) सर्व्वेषांगंतिसूक्तेनेति ख० ग० ङ०, सर्व्वेषां यतिसूक्तेनेति पुस्तकान्तरं।
(९) क० घ० च० पुस्तकेषु, स्वाहाकृतास्वसंख्याश्चिति पाठोऽस्ति। स्वाहाकृतयोऽनेकाश्चेति ख० ग० ङ० पुस्तकान्तरञ्च।

---

(क) ऋ० ६, ४८, १७। (ख) ऋ० २, ३६, ८। (ग) ऋ० १, २६, ५।
(घ) ऋ० १, १८८, ११।

तत्त्वैवं सोऽय[1]मेवाग्निर्भवतीति विनिश्चयः ॥२९॥
अयं कर्त्ता च देवानां [2]याहुतिस्तामिहैकजा।
अयं प्रसूतिर्भूतानां स तेषा[3]मयमव्ययः ॥३०॥
तनूनपा[क]द्द्वितीया तु [4]नराशंस[ख]वती च या।
समस्यते [5]प्रयोक्तव्ये चिष्वेवोभयवत्त्विह[6] ॥३१॥
नराशंसवती वा स्या[7]द्द्वितीयेह [8]प्रजार्थिनां।
बलकामोऽथ वा यः स्या[9]द्भूरिमिच्छति वापि [10]यः[11] ॥३२॥
आग्नेयमिति[12] यत्त्वेभि[13]र्वैश्वदेवमिहोच्यते।

---

(१) त्वयमिति ग० ङ० पुस्तकान्तरञ्च।
(२) अयं हि कर्त्ता स्वाहानामिति ख० ग० ङ० पुस्तकान्तरञ्च।
(३) सर्व्वेषामिति ख० ग० ङ० पुस्तकान्तरञ्च।
(४) चेति ख० ग० ङ० पुस्तकान्तरञ्च।
(५) समस्येते इति ख० ग०, समश्येते इति ङ० पुस्तकान्तरञ्च।
(६) उभयवत्स्वितिति ग०, उभयवत्सु त्विति ङ०, उभयवत्सु चेति पुस्तकान्तरं।
(७) चास्यादिति ग० ङ०।
(८) चेति ख० ग० ङ० पुस्तकान्तरञ्च।
(९) अन्नकामो वेति ख० ग० ङ० पुस्तकान्तरञ्च।
(१०) भूतिमिच्छेद्यापीति ख० ग० ङ० पुस्तकान्तरञ्च।
(११) वेति ग०।
(१२) आग्नेयं सूक्तमिति ख० ग० पुस्तकान्तरञ्च, आग्नेये सूक्तमिति ङ०।
(१३) सूक्तमेभिर्यदिति ख० ग० ङ० पुस्तकान्तरञ्च।

---

(क) ऋ० १, १८८, २। (ख) ऋ० १, १४२, ३।

तदिन्द्रलिङ्गं गायत्रं [क]वैश्वदेवेषु शस्यते ॥२३॥
इन्द्रसोममितीन्द्रं तु [1]वद्दा द्व्यकमार्णवम् ।
तस्मिन् यदृतुना सप्त प्रत्यृचं स्तौति देवताः ॥२४॥
तत्रर्तुनेति षट्सृचु चतसृष्वृतुभिः सह ।
पुनर्द्वयोर्ऋतुनेति बहुत्वैकत्वलक्षिताः ॥२५॥
ऋतवो देवताभिश्च निपातेनेह संस्तुताः ।
अथर्तुप्रैषसूक्ते च तथा गार्त्समदेऽपि च[2] ॥२६॥
मुख्यया लिङ्गमेवास्तौ[3]न्मरुतस्तु द्वितीयया ।
तृतीयया तु त्वष्टारमग्निन्तु परया ततः[4] ॥२७॥
पञ्चम्या तु पुनः शक्रं षष्ठ्या देवावृतावृधौ ।
सप्तम्या चाभिरग्निन्तु चतुर्भिर्द्रविणोदसं[ख] ॥२८॥
आदेशाद्दैवतं ज्ञेयमृतुमन्त्राणां न[5] लिङ्गतः ।
न शक्यं लिङ्गतोऽप्यासां[6] ज्ञातुन्तत्त्वेन दैवतं[7] ॥२९॥

---

(१) इन्द्रसोमं पिबेतीममिति ख० ङ० पुस्तकान्तरञ्च, इममित्यत्र इदमिति ग० ।
(२) तत्रर्तुनेति षट्सृच्चु इत्यादि तथा गार्त्समदेऽपि चेत्यन्तपाठः क० घ० च० चिह्नितपुस्तकेषु न विद्यते ।
(३) एवोर्चन्निति क० घ०, एवार्चन्निति च० ।
(४) चतुर्थ्या चाग्निमेव चेति ख० ग० ।
(५) मन्त्रायान्त्विति क० घ० च० ।
(६) ज्ञातामिति ख० ङ० पुस्तकान्तरञ्च ।
(७) देवताः इति क० घ० च० ।

---

(क) ऋ० १, २७ ४ । (ख) ऋ० ६, ८८, १ ।

एकादश्या तु नासत्यौ[क] द्वादश्याग्निमिमं पुनः।
पृथक् पृथक् स्तुतीदन्तु सूक्तमाह रथीतरः[१] ॥४०॥
बहुदैवे द्विदैवे[२] वा गुणैर्वा[३] यत्र कर्मजैः।
स्तूयते देवतैकैका विभक्तस्तुति[४] तद्विदुः ॥४१॥
वैश्वदेवानि सूक्तानि त्रिविधानि भवन्ति तु।
सूर्यसंस्तवसंयुक्तं विश्वलिङ्गं पृथक्स्तुतिः[५] ॥४२॥
पृथक्स्तुति तु यत्प्रोक्तं तद्विद्या[६]द्बहुदैवतम्।
विश्वलिङ्गन्तु तच्च विश्वैः स्वैः कर्मजैर्गुणैः[७] ॥४३॥
विश्वानुद्दिश्य यद्देवान् स्तौति[८] सूर्य्यमनेकधा।
देवानेवा[९]भिसंस्तौति तं प्राहुः सूर्य्यसंस्तवम् ॥४४॥
न तु भागोऽस्यसूक्तादौ[१०] न सूर्य्ये त्वौषधेषु वा[११]।

---

(१) रथान्तरः इति ख०।
(२) बहुदेवतद्वन्द्वे इति क० घ० च०, बहुदेवते द्वन्द्वे इति ख०।
(३) गुणैः स्वैरिति क० घ० च०।
(४) देवतैककामभक्तिस्तुतीति क० ख० घ० च०।
(५) पृथक् स्तुतीति निर्विसर्गान्तपाठः समीचीनः।
(६) यद्विद्यादिति क० घ० च०।
(७) कर्म्मभिः स्तुतः इति क० घ० च०।
(८) देवांस्तु यत्रेति क० घ० च०।
(९) देवैरेवेति क० घ० च०।
(१०) भागस्य सूक्तादाविति ख० ग० ङ० पुस्तकान्तरञ्च, भागो ब्रह्मसूक्तादाविति च०।
(११) सूक्तेष्वेवौषधेषु वेति ग०, सूक्तेष्वेवौषधेषु वेति ङ०।

---

(क) ऋ० १०, २४, ५।

न सावित्रे ह्वयामी[क]ति न सूर्यायां[ख] कृतौ शुभे[१] ॥४५॥
न चैवैवं प्रपादेषु[२] मन्त्रेष्वन्येषु केषुचित् ।
न च यत्र सजोषेति पदं वा स्यात् सजू[ग]रिति ॥४६॥
यस्मिन्[३] प्रसङ्गादपि तु बह्वीनां परिकीर्त्तनम् ।
वैश्वदेवं तदप्याह स्थविरो लोमकायनः[४] ॥४७॥
असंस्तुतं संस्तुतवत्[५] प्रदिष्टं दैवतं क्वचित् ।
मन्त्रैस्तदृषयोऽर्चन्ति[६] तान्तु बुध्येत शास्त्रतः[७] ॥४८॥
आदौ तु मध्ये वान्ते च विधावृत्तु च कर्मभिः[८] ।
कर्माण्यनुपदिष्टानि प्रदिष्टान्यपि तु क्वचित्[९] ॥४९॥
कर्म्मैव तावत्सावित्र्यां निविद्धि स्तौति कर्म्मणा ।

---

(१) मखे इति ग० ङ० ।
(२) प्रवादेष्विति ख० ग० ङ० ।
(३) अस्मिन्निति क० घ० च० ।
(४) रोमकायनः इति ख० ङ० ।
(५) स्तुतं वापीति ख० ग० ङ० ।
(६) देवतास्तृषयोऽर्चन्तः इति क० घ० च० ।
(७) शास्त्रविदिति ख० ग० ङ० पुस्तकान्तरञ्च ।
(८) पृथक्त्वेषु च कर्त्तृभिरिति ग० च०, पृथक्केषु च कर्त्तृभिरिति पुस्तकान्तरं ।
(९) वृत्तवदिति क० घ० च० ।

---

(क) ऋ० १, ३५, १ । (ख) ऋ० ५, ७३, ५ । (ग) ऋ० १, २३, ७ ।

यद्वेनुस्त्रय्यमनुषो[१] वोढा दोग्ध्यश्रुरेव वा ॥५०॥
भागेयः स्तौति चाम्यादीन्मित्रादीनप्यसंस्तुतौ[२]।
यदेभिरिति चैतस्मिन् वैश्वदेवेऽग्निमर्चति ॥५१॥
तदाऽऽद्यरादावन्ते च प्रायशोऽन्यां स्तुवनृषिः[३]।
प्रातर्योगात्[क][४] प्रसङ्गाद्वा स्तौत्यन्यामपि देवताम् ॥५२॥
यस्यां वदत्यर्थवादान्[५] सा ज्ञेया सूक्तभागिनी।
यान्तु स्तौति प्रसङ्गेन सा विज्ञेया निपातिनी ॥५३॥
चतुर्थी भण्यते[६] चास्मिन् सूक्ते वै[७] सूक्तभागिनी।
यस्मिन् सर्वांस्तु राजर्षीनृषीन् वापि स्तुवन्नृषिः ॥५४॥
मेधातिथिरगस्त्यस्तु[८] बृहदुक्थो मनुर्गयः[ख]।
ऋजिश्वा[ग] च सुकर्षश्च श्यावाश्वो[घ] गोतमो सुग्रः[९] ॥५५॥

---

(१) यद्रेनुः सम्यनश्चाश्वाविति ङ० पुस्तकान्तरञ्च।
(२) चाश्वसंस्तुताविति क० ख० घ० च०।
(३) अन्याः स्तुवन्नृचः इति ग० ङ० पुस्तकान्तरञ्च।
(४) प्रतियोगादिति ग० ङ० पुस्तकान्तरञ्च।
(५) वदन्त्यर्थपादाः इति क० घ० च०।
(६) न तु व्याहन्यते इति क० घ० च०।
(७) वेति ग०।
(८) चेति ख० ङ०।
(९) मानवो यमः इति ख० ग० ङ० पुस्तकान्तरञ्च।

---

(क) ऋ० १०, ४१, २। (ख) ऋ० ६, २, ८। (ग) ऋ० ५, २९, ११। (घ) ऋ० ३, ५१, ७।

स्वस्त्यात्रेयः परुच्छेपः कक्षीवा(क)नाथिरौर्वशः(१) ।
नाभाक(ख)श्चैव निर्दिष्टो दुवस्यु(ग)र्ममतासुतः(२) ॥५६॥
विहव्यः(घ) कश्यप ऋषि(३)रवत्सारश्च नामयः(ङ) ।
वामदेवो मधुच्छन्दाः पार्थो दक्षसुता(४)दितिः ॥५७॥
गृत्समद(च)श्चर्षिर्देवाः सप्तर्षयश्च(५) ये ।
तापसोऽग्निर्ऋषिः(६) कुत्सः(छ) कुसीदी पित(ज) एव च ॥५८॥
बन्धुप्रभृतयश्चैव चत्वारो भ्रातरः पृथक् ।
विष्णुश्च नेजमेषश्च नाम्ना संवनन(७)(झ)श्च यः ॥५९॥
एते तु सर्व्वे(८) एवास्य विश्वैः स्वैः कर्म्मजैर्गुणैः ।
समस्तैरथ च(९) व्यस्तैः पृथक्सूक्तेषु तुष्टुवुः ॥६०॥

---

(१) उर्व्वंसुरिति ङ० पुस्तकान्तरञ्च ।
(२) ममतासुताः इति घ० च० ।
(३) चर्षिरिति ख० ङ० पुस्तकान्तरञ्च ।
(४) पार्थ्योदक्षसुतेति क० घ० च० ।
(५) देवास ऋषयश्चेति ङ० पुस्तकान्तरञ्च ।
(६) यमोऽग्निस्तापसः इति ग० ङ० पुस्तकान्तरञ्च ।
(७) सञ्चवन इति ग० ।
(८) सर्व्वा इति क० घ० च० ।
(९) वेति ङ० पुस्तकान्तरञ्च ।

---

(क) ऋ० १, १२६, २ । (ख) ऋ० ८, १४, २ । (ग) ऋ० १०, १००, १२ । (घ) ऋ० १, १०८, ६ । (ङ) ऋ० १, १३९, ९ । (च) ऋ० २, १९, ८ । (छ) ऋ० १, १०६, ६ । (ज) ऋ० १, ५२, ५ । (झ) ऋ० १०, ९३, १२ ।

पार्थिवो द्रविणोदा[क]ग्निः[१] पुरस्ताद्यस्तु कीर्त्तितः ।
तमाङ्गरिन्द्रं दाढ्त्वा[२]दृके तु बलवित्तयोः ॥६१॥
अयं हि द्रविणोदाऽग्निरयं दाता बलस्य हि ।
द्रविणोदाग्निरेवायं द्रविणोदा[ख]स्तदोच्यते ॥६२॥
आग्नेयेष्ववदृश्येत[३] प्रवादाद्द्रविणोदसः ।
[४]ऐन्द्रस्य नवकस्येह[५] यदैन्द्रावरुणं परम् ॥६३॥

---

(१) द्रविणोदोऽग्निरिति क० घ० च० ।

(२) अतिदाढ्त्वादिति ङ० पुस्तकान्तरञ्च ।

(३) आग्नेयेष्वेव दृश्यन्ते इति ग० ।

(४) ख० ङ० चिह्नितपुस्तकयोः, पुस्तकान्तरे च ऐन्द्रस्य नवकस्येहेति श्लोकार्द्धात्प्राक्, द्रविणोदाग्निरेवायमिति श्लोको न विद्यते । तत्र,—

जायते च बलेनायमध्येत्यृषिभिरध्वरे ।
हवींषि द्रविणां प्राङ्हविषो यत्र जायते ॥
दातारमृत्विजस्तेषां द्रविणोदास्ततः स्वयम् ।
ऋत्विणां पुत्र इत्येषां दृश्यते सहसोपरौ ॥
मध्यमाद्वा यतो जज्ञे तस्माद्वा द्रविणोदसः ।

एतत्सार्द्धश्लोकद्वयं दृश्यते । ङ० चिह्नितपुस्तके द्रविणोदसः इत्यत्र द्राविणोदस इतिपाठः, पुस्तकान्तरे च अध्येतीत्यत्र अध्येत्विति पाठोऽस्ति ।

(५) नवकस्यापेति ङ० पुस्तकान्तरञ्च ।

---

(क) ऋ० १, १५, १० । (ख) ऋ० १, १५, ७ ।

तस्योत्तरं तु [१]सोमानं स्तूयते ब्रह्मणस्पतिः।
चतसृभिः पञ्चभिराद्याभि[२]स्तिसृभिः सदसस्पतिः ॥६४॥
नराशंसो[क]ऽन्यथा चर्चा सोमेन्द्रौ तु निपातितौ।
चतुर्थ्यां सोम इन्द्रश्च पञ्चम्यां दक्षिणा सह[३] ॥६५॥
प्रस्तुताद्दक्षिणा प्रोक्ताः सम्बन्धाः स्वानलोकयोः।
प्राजापत्यं तथैन्द्रः स्यादिति तस्येह नामनी[४] ॥६६॥
कथिते द्वे च षट्चान्यान्येषाञ्चाद्याः[५] प्रजापतिः।
[६]शिष्टानि यानि नामानि तानि वक्ष्याम्यतः परं ॥६७॥
सप्तभिः कस्य कामस्य सदसस्पतिरेव च।
बृहस्पति[७]र्वाचस्पतिस्तत[८]स्तु ब्रह्मणस्पतिः ॥६८॥
तृतीयान्ते तु सूक्तस्य चतुर्थं[९] पञ्चमस्य यत्।

---

(१) तस्योत्तरे चेति क॰ घ॰ च॰।
(२) अन्याभिरिति ङ॰।
(३) तथेति क॰ घ॰।
(४) यानि तस्येह नामानि प्राजापत्यानि तानि त्विति ङ॰ पुस्तकान्तरञ्च।
(५) कथितानीह षड्यानि तेषां त्वाद्य इति ङ॰ पुस्तकान्तरञ्च।
(६) शिष्टानीति श्लोकार्द्धं क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु न दृश्यते।
(७) बृहस्पतिरिति क॰।
(८) स्तुत इति ख॰ च॰।
(९) प्रथममिति ख॰ ङ॰ पुस्तकान्तरञ्च।

---

(क) ऋ॰ १, १४२, ३।

चतुर्भिरितरैस्तच(१) न सूक्तं नाप्युगुच्यते(२)॥६९॥
सर्वाण्येव तु सर्वासां देवतानां प्रजापतेः।
नामानि कथयन्त्येते सम्यग्भक्तिदिदृक्षवः॥७०॥
तदाङ्गैनैतदेवं स्यादृष्टानामेव(३) हि स्तुतः।
तैरेव चास्य कल्प्यन्ते(४) ऋतवश्च हवींषि च॥७१॥
मध्वग्निर्मध्यमस्थानेः पर(५) मग्निस्तु पार्थिवः।
नवकेनेह(६) सूक्तेन प्रतीत्य(७)(क)मिति संस्तुतः॥७२॥
मरुतां साहचर्यात्तु(८) सूक्तेऽस्मिन्नाग्निमारुते।
मन्यते माध्यमञ्चैव(९) यास्कोऽग्निं न तु पार्थिवम्॥७३॥
स्यादयं पार्थिवस्त्वेव(१०) तथा रूपं हि दृश्यते।

---

(१) स्वेगमिति क० घ० च०।

(२) नापि त्वृचोऽश्नुते इति क० घ० च०, नानाप्यृचोऽश्नुते इति ग०।

(३) एव इति ख० ग० ङ०।

(४) तैरेवास्य प्रकल्प्यन्ते इति ख० ङ० पुस्तकान्तरञ्च।

(५) चयमिति क० ग० घ० च०।

(६) नवर्चनेहेति ङ० पुस्तकान्तरञ्च।

(७) प्रत्यञ्चमिति ङ०।

(८) वेति ङ०।

(९) मध्यमं त्वेवमिति ख० ङ० पुस्तकान्तरञ्च।

(१०) पार्थिवेष्वेवेति ङ० पुस्तकान्तरञ्च।

---

(क) ऋ० ७, ६८, ६।

भूयसे[क] वीतये[ख] चेति[१] वैद्युतेन तदृक्षि च[२] ॥७४॥
अथ स्याद्[३]भिधानस्य देवतायाः पृथक् पृथक्[४] ।
क्वचोऽर्धर्चस्य पादस्य कथञ्ज्ञायेत[५] दैवतम् ॥७५॥
यथा निविदि सावित्र्यां स्तूयते कर्म कर्मणा[६] ।
दोग्ध्री धेनु[ग]र्वोढानड्वानाशुः सप्तिपुरं धियाः[७] ॥७६॥
यथा वरुणमिन्वीया[८] वरुणः प्राविता भुवत्[घ] ।
सूक्तप्रायैरेभिरग्ने[९] परीक्ष्यं[१०] तत्र देवताः[११] ॥७७॥
अन्यानां दैपदादीनां द्विदेवकडदेवतम् ।
असंस्तुतं संस्तुतवन्नदिष्टं दैवतं क्वचित् ॥७८॥

---

(१) ऊयसे तीतये चेतदिति क॰ घ॰ च॰।
(२) वैद्युतेनेत्यतस्मिन्निति ख॰ छ॰।
(३) स्यतस्मिन्निति छ॰ पुस्तकान्तरञ्च।
(४) कृतौ कृताविति ख॰ छ॰ पुस्तकान्तरञ्च।
(५) ज्ञायेतेति ख॰ छ॰ पुस्तकान्तरञ्च।
(६) सूर्य्यकर्म्मेति छ॰ पुस्तकान्तरञ्च।
(७) तथैव चेति क॰ घ॰ च॰।
(८) यथा च प्रश्नो मिन्वीयाः इति क॰ घ॰ च॰।
(९) चमेरिति ख॰ छ॰ पुस्तकान्तरञ्च।
(१०) परीक्ष्यः इति म॰।
(११) परोक्षस्तत्र संस्तवः इति छ॰ पुस्तकान्तरञ्च।

---

(क) ऋ॰ १, १९, १। (ख) ऋ॰ १, ५, ६।
(ग) ऋ॰ २, ३१, ७। (घ) ऋ॰ १, ३६, ८।

यत्र द्विदैवते मन्त्र एकवद्दैवतोच्यते।
विभक्तस्तुति तद्विद्यात् बहुवद्बहुवच्च तत्[1] ॥७९॥
आशीर्वादेषु संस्थास्तु कर्मसंस्थास्तु देवताः।
बह्वो हि बहुवद्यत्र[2] द्विवद्द्वौ यत्र संस्तुतौ[3] ॥८०॥
सुधन्वन[क] आङ्गिरसस्या[ख]सन् पुत्रास्त्रयः पुरा[4]।
ऋभु[ग]र्विभ्वा[घ][5]च वाज[ङ]श्च[6]शिष्यास्ते त्वष्टुरेव च[7] ॥८१॥
शिक्षयामास तांस्त्वष्टा त्वाष्ट्रं यत्कर्म किञ्चन।
परिनिष्ठितकर्माणो विश्वेदेवा उपाह्वयन् ॥८२॥
धेनुं सबर्दुघां चक्रुरमृतं यदवद्यते।
कृतवन्तयेऽश्विभ्यां रथं दिव्यं त्रिबन्धुरम् ॥८३॥
इन्द्राय च हरी देवप्रहितेनाग्निनापि यत्।

---

(१) बहुत्ववहुवच्च यदिति ख० पुस्तकान्तरञ्च।
(२) वह्वो हि बहुवाच्यत्र इति ख० ङ० पुस्तकान्तरञ्च।
(३) द्विपदे यत्र संस्तुते इति क० ग० घ० च०।
(४) आसन् सुधन्वनः पुत्रास्त्रय आङ्गिरसस्य ये इति ख० ङ० पुस्तकान्तरञ्च।
(५) विभ्वेति ग० घ०।
(६) वायुश्चेति ख०।
(७) त्वष्टुश्च तेऽभवन्निति ख० ग० ङ० पुस्तकान्तरञ्च।

---

(क) ऋ० ५, ४२, ११। (ख) ऋ० ४, ४०, १। (ग) ऋ० १, ११०, ७।
(घ) ऋ० १, १११, १। (ङ) ऋ० १, २०, ८।

एकश्च समभित्युक्ते ज्येष्ठो[१] द्वावित्यथाह च ॥ ८४ ॥
उक्त्वा ततश्चतुश्चमसान्यथोक्तं तच दर्शिताः ।
त्वष्टा च सविता[२]चैव[३] देवदेवप्रजापतिः ॥ ८५ ॥
सर्व्वान् देवान् समामन्त्र्य चाम्रुतत्वं ददुश्च ते ।
तेषामाद्यन्त्ययो[४] गाथा दृश्यते बड्ड वस्तवः[५] ॥ ८६ ॥
विश्वेषां ते ततश्चक्रु[६]र्वाहनान्यायुधानि च ।
तृतीयसवने तेषां तैस्तु भागः प्रकल्पितः ॥ ८७ ॥
अपिब[क]त्सोममिन्द्रश्च तैसत्र सवने[७] [ख]सह ।
तेषां स्तुतिरिन्द्रसूक्तमय[८]मित्यार्भवं[९] परम् ॥ ८८ ॥

---

(१) त्वष्टेति पुस्तकान्तरं ।
(२) सवितेति ङ० ।
(३) चैवेत्यत्र चैवेतिपाठः समीचीनः ।
(४) आद्यन्तयोरिति सविसर्गान्तपाठो युक्तः ।
(५) येनुं सवर्दुघामित्यदि दृश्यते बड्डवस्तवः इत्यन्तपाठः क० ग० घ० च० चिह्नितपुस्तकेषु न विद्यते । दृश्यते बहवस्तव इत्यत्र, दृश्यन्ते बहव-स्तवा इति पाठः साधुः ।
(६) ततस्ततश्चक्रुस्ते तद्ददिति ङ० पुस्तकान्तरञ्च ।
(७) सवनैरिति ग० ।
(८) त्वयमिति क० ग० घ० च० ।
(९) इत्यष्टकमिति ग०ङ० पुस्तकान्तरञ्च ।

---

(क) ऋ० १, ३२, ३। (ख) ऋ० १, १६, ५।

इहेन्द्राग्नी स्तुतौ देवौ तृतीयस्यादिरश्विनौ(१) ।
हिरण्यपाणिं(२) सावित्री तिस्रश्चाप्यत(३) उत्तराः(४) ॥८९॥
एकाग्नेर्द्वे तु देवानां(५) द्वादश्यो देवपत्नयः ।
इन्द्राणी वरुणानी च आग्नेयी(६) च(७) पृथक् स्तुताः ॥९०॥
द्यावापृथिव्यौ द्वे च स्यात् स्योना(क)दित्येव पार्थिवी(ख)(८) ।
देवानां वात इत्येषा(९) सूक्तशेषस्तु वैष्णवः ॥९१॥
वायोस्तोषेन्द्रवायुभ्यां तृचो द्वाभ्यां(१०) ततः परम् ।
तृचे(११) मित्रावरुणयोस्तथेन्द्राय मरुत्वते ॥९२॥

---

(१) आदितोऽश्विनाविति ङ० पुस्तकान्तरञ्च ।

(२) हिरण्यपाणिरिति पाठो युक्तः ।

(३) ऽप्यन्य इति ख०, सावित्र्यस्ततोऽप्यत इति ङ० पुस्तकान्तरञ्च ।

(४) चतस्रश्चाप्यथोत्तराः इति ग० ।

(५) च देवीनामिति ङ० पुस्तकान्तरञ्च ।

(६) अग्नायीति ख० ङ० पुस्तकान्तरञ्च ।

(७) ता इति ख० ङ० पुस्तकान्तरञ्च ।

(८) महीदे स्योनेत्यृक् पार्थिवी स्तुतेति ङ० ।

(९) व्रतो देवा इति देवीति क० घ० च० ।

(१०) तृचो द्वाभ्यामिति क० ग० घ० ङ० पुस्तकान्तरञ्च, तृचस्ताभ्यामिति ख० ङ० ।

(११) तृचः इति ग० ङ० पुस्तकान्तरञ्च ।

---

(क) ऋ० १,२२,१५। (ख) ऋ० ८,२५,६।

उषो[१] विश्वेषां देवानां पूषा आघृणये[क] इषः[२] ।
असक्तो हि घृणिस्तस्य दन्नः पूर्वे हृती[ख]रथे[३] ॥९३॥
आघृणिस्तद्युतः पूषा स गोभिरिष्यते यतः[४] ।
यथा हि मधुनः पूर्णो दृतिर स्तौति चाश्विनौ[५] ॥९४॥
आवर्त्तनिं मधुनेति दृतेरिव च दृश्यते[६] ।
अर्धर्चमा अपां ज्ञेया अर्धर्चान्याग्निदेवता[७] ॥९५॥
कस्य नूनमनु काण्वाया आग्नेय्यृक् सवितुस्तृचः ।
अगभक्तस्य[ग] भागी वा परं यदिति[८] वारुणम्[९] ॥९६॥
वसिष्ठाहीति चाग्नेये ह्यगग्नेर्मध्यमस्य तु ।

(१) इष इति ग० घ० ङ० च० ।
(२) आघृणयेति चेति ख०, चाघृणिरित्यथः इति ग०, तथाघृणयंति चेति ङ० ।
(३) दतः रथे इति ङ० पुस्तकान्तरच ।
(४) गोरिभोरिष्यते ततः इति ख० ।
(५) दितिमर्थोति चाश्विनाविति ख०, वाश्विनौ इति ङ० ।
(६) असक्तो हि घृणिस्तस्येत्यादि दृतिरेव च दृश्यते इत्यन्तपाठः ख० ग० घ० च० चिह्नितपुस्तकेषु न दृश्यते ।
(७) अर्धर्चान्याग्निदेवतेति ख० ङ०, अप्यर्धान्याग्निदेवतेति ग० ।
(८) हि यथेति ग० ।
(९) यश्चिद्धि वारुणे इति ख० ।

(क) ऋ० १, २३, १४ । (ख) ऋ० ४, ४५, २ । (ग) ऋ० १, २४, ५ ।

जराबोधे[क]ति विज्ञेया वैश्वदेव्युत्तमोत्तमा[१] ॥९७॥
परास्वतस्रो यास्त्वैन्द्रे चेन्द्रोलूखलयोः स्तुतिः[२]।
मन्येते[३] यास्ककार्थक्या[४]विन्द्रस्येति तु भागुरिः ॥९८॥
यच्चिद्ध्युलूखलस्य द्वे द्वे परे मुसलस्य तु।
चर्माधिषवणीयं[५] वा सोमं वान्त्या प्रशंसति ॥९९॥
ऐन्द्रं यच्चिद्धि सत्येत्युत्तरस्याश्विनात्तृचात्[६]।
आश्विनादुत्तरस्त्वन्त्य उषस्य[७] स्तृच उत्तमः ॥१००॥
स्तूयमानः शश्वदिति प्रीतस्तु मनसा ददौ।
शुनःशेपाय[ख] दिव्यन्तु रथं सर्वं हिरण्मयम् ॥१०१॥
आग्नेयं सूक्त[८]मैन्द्रे च[९] चिच्चिदित्याश्विनं ततः।
अतोऽर्थवादं कर्मैतदिन्द्रस्येति तु शंसति ॥१०२॥
पादोऽग्नये क्रथामीति मैत्रावरुण उत्तरः।

---

(१) वैश्वदेव्युत्तमानमः इति क० ग० घ० च०।

(२) यत्रेति मुसलोलूखलस्तुतिरिति ङ० पुस्तकान्तरञ्च।

(३) मन्येतामिति ख० ङ० पुस्तकान्तरञ्च।

(४) याखाखाष्कक्याविति ङ० पुस्तकान्तरञ्च।

(५) चर्म्माधिषवणीये इति ङ०।

(६) आश्विनं तृचमिति ङ०।

(७) आश्विनेत्युत्तरं कस्त औषस्य इति ङ० पुस्तकान्तरञ्च। कस्त इत्यत्र कश्चिदिति ख०।

(८) सत्यमिति ख० ग० ङ० पुस्तकान्तरञ्च।

(९) द्वे इति ङ०।

---

(क) ऋ० १, २७, १०। (ख) ऋ० १, २४, १२।

तृतीयो रात्रिसंस्तावः[१] सूक्तं सावित्रमुच्यते ॥१०३॥
पञ्चेमानि जगौ दृष्ट्वा[२] सूक्तान्याङ्गिरसो मुनिः ।
हिरण्यस्तूपतां प्राप्य[३] सख्यं चेन्द्रेण शाश्वतम् ॥१०४॥
आग्नेयं प्रेति मारुतं क्रीळं[४] [क]चोपि पराश्रतः ।
सूक्तमुद्[५]ब्राह्मणस्तत्यं यं रचन्ति चयस्तथा ॥१०५॥
वरुणार्य्यममित्राणां मध्य आदित्यदैवतः ।
पौष्णं सपूषन्[६] षड्रौद्र्य[७]स्तृतीया न तु केवला ॥१०६॥
मित्रेण वरुणेनाच[८] विश्वैर्देवैश्च संस्तवः ।
उक्तमचर्षिणा पूर्व्वमाद्याद्दैवतं विना ॥१०७॥
ज्ञातुं न शक्यते लिङ्गात्तथापि क्वचिदुच्यते ।
आदित्या वसवो रुद्रास्त्वमग्न इति च स्तुताः ॥१०८॥
इषः सौम्योऽग्न[९] अग्नेये प्रगाथेनाश्विनौ स्तुतौ ।

---

(१) रात्रिः स्तुता तृतीयेनेति ङ० ।
(२) दृष्ट्वेति ख० ग० ङ० पुस्तकान्तरञ्च ।
(३) प्राप्तः इति ङ० ।
(४) क्रीलमिति पुस्तकान्तरं ।
(५) उत्तिष्ठेति ख० ङ० पुस्तकान्तरञ्च ।
(६) सम्पुष्यन्निति पाठो विशुद्धः ।
(७) पौष्णं संदशरौद्रकेति ङ० पुस्तकान्तरञ्च ।
(८) वरुणेनास्येति ख० ङ० पुस्तकान्तरञ्च ।
(९) सौम्यम इति पुस्तकान्तरं ।

---

(क) ऋ० १, ३७, १ ।

महोपमा लिङ्गभाजा वयं सोमः सुदामवः[१] ॥१०९॥
अर्धर्चो देवदेवत्य एष इत्याग्निने परे।
आदित्यं मन्यते यास्को हविषेति[२] महस्तुतं[३] ॥११०॥
महोपमे ततः सौर्य्यमुदुत्यमिति संस्तुतम्।
अग्निर्येन वरुणोषु रोगघ्नश्च उत्तमः ॥१११॥
रोगोपनुद[४]माद्याभ्यामुद्यन्नित्युत्तमे तृचे।
अर्धर्चे तु द्विषद्द्वेष ऐन्द्रः सव्यः[५] [क]प्रतर्षिषु ॥११२॥
स्वयमिन्द्रसमं पुत्रमिच्छन्नोऽङ्गिरसो मुनेः।
वव्रेव[६] सव्यो भूत्वर्षि[७] र्योगित्वात्पुत्रताङ्गतः ॥११३॥
प्रथमे मण्डले ज्ञेया ऋषयस्तु प्रतर्षिनः।
क्षुद्रसूक्तमहासूक्ता अन्ये मध्येषु मध्यमाः[८] ॥११४॥

---

(१) उक्तमन्त्रर्षियोत्यादि वयं सोमः सुदामवः इत्यन्तपाठः क० ग० घ० च० चिह्नितपुस्तकेषु न विद्यते।
(२) हविषेति पुस्तकान्तरं।
(३) आदित्यमित्यादि श्लोकार्द्धं क० ग० घ० च० चिह्नितपुस्तकेषु नोपलभ्यते।
(४) रोगापनुद्वीति ग०, रोगापनुतिविति ङ०।
(५) अध्रर्चन्तु द्विषद्द्वेषदैन्द्राण्यक्तेति ङ०।
(६) वव्रे चेति ख०।
(७) भूत्वर्षेरिति क० ग० घ० च०।
(८) प्रथमे मण्डले ज्ञेयेत्यादि अन्ये मध्येषु मध्यमा इत्यन्तपाठः क० घ० च० चिह्नितपुस्तकेषु नेक्ष्यते।

---

(क) ऋ० १, ८२, ५।

नवकं जातवेदस्यं नूचिषन्तु वया इति।
वैश्वानरीयं तत्सूक्तमाग्नेयन्तु ततः परम्[१] ॥११५॥
ऐन्द्राण्यस्मै तत[२]स्त्रीणि वृष्णे शर्धाय[क] मारुतम्।
आग्नेयानि तु पश्चे[ख]ति नवप्रश्वङ्घि वामिति[३] ॥११६॥
[४]दृष्टाश्विनानीमानीति इन्द्रावरुणयोः स्तुतिः।
सौपर्णयास्तु काश्चिच्च[५] निपात[६]स्तुतिषु स्तुताः ॥११७॥
उपप्रयन्तः[ग] सूक्तानि आग्नेयान्युत्तराणि षट्।
हिरण्यकेशो[घ] रजसस्तृचोऽग्नेर्मध्यमस्य तु ॥११८॥
इत्येति[७] पञ्च त्वैन्द्राणि[८] यामित्यस्यां निपातिताः।

---

(१) वह्निमाग्नेयमुत्तरमिति ख० ङ० पुस्तकान्तरञ्च।
(२) इन्द्रः इति ङ०।
(३) नवषड्ढैपदानि लिति ङ० पुस्तकान्तरञ्च।
(४) ङ० चिह्नितपुस्तके पुस्तकान्तरे च, दृष्टाश्विनानीति श्लोकार्द्धस्थाने, उपान्त्यं सप्तमेऽर्द्धर्चं न मैत्रावरुणं विदुरिति पाठोऽस्ति।
(५) याः काश्चिदिति ग० ङ० पुस्तकान्तरञ्च।
(६) निपाताः इति ङ० पुस्तकान्तरञ्च।
(७) इच्छेतीति ख० ङ० पुस्तकान्तरञ्च।
(८) चैन्द्राणीति ङ० पुस्तकान्तरञ्च।

---

(क) ऋ० १, ३७, ४। (ख) ऋ० १, ६५, १। (ग) ऋ०१, ७४, १।
(घ) ऋ० १, ७९, १।

इध्म[क]मनुरथर्वा च मारुतानि प्रये ततः ॥११९॥
चत्वार्य्यानो[ख] वैश्वदेवे द्वे देवानां स्तुतिर्मता[१]।
आनोभद्रास्व देवानां भद्रं यावच्छतं पुनः ॥१२०॥
मधुवातास्तृचे तस्मिन् परमं मध्वपीष्यते।
माक्षर्या मन इत्येषां वैश्वदेवी ऋगिष्यते[२] ॥१२१॥
[३]अदितिर्द्यौरिति त्वस्यां विभूतिः कथिता[४]दितेः।
त्वं सोमसौम्यमौषस्य[५] मेता उत्यास्तृचोऽश्विनोः ॥१२२॥
अग्निनाग्नेस्व[६] सोमस्य अग्नीसोमाविति स्तुतिः[७]।

---

(१) चत्वार्य्यान इति सूक्ते देवानां स्तुतिरुत्तरेति क० ख० घ० च०, चत्वार्य्यानो इत्यत्र चत्वार्य्यामाविति ख०।

(२) आनो भद्रास्व देवानामित्यादि वैश्वदेवी ऋगिष्यते इत्यन्तपाठः क० घ० च० चिह्नितपुस्तकेषु नोपलभ्यते।

(३) पुस्तकान्तरे, अदितिर्द्यौरिति श्लोकार्द्धं, आनो भद्रास्वेति श्लोकार्द्धात् परं पठितं।

(४) कथ्यते इति ख० ङ० पुस्तकान्तरञ्च।

(५) मेघस्यमिति ख०, मेधस्यमिति क० घ० च०।

(६) अश्विनाग्नेः ससेति क० घ० च०।

(७) विमं स्तुमे इति ङ० पुस्तकान्तरञ्च।

---

(क) ऋ० १, ८०, १६। (ख) ऋ० १०, ५५, ५।

गोतमादौशिजः[क] कुत्सपरुच्छेपावृषे:[१] परः ॥१२३॥
इमं कुत्स[ख] आङ्गिरसो ददर्शजातवेदसं जगाद षोड़शर्चं।
पूर्वा देवा इत्यृचो देवदेवास्त्रयः पादा उत्तमायास्ततोऽर्द्धम् ॥१२४॥
तस्यैव वा यस्य तत्पूर्वमुक्तं मित्रादिभ्यो वाच[२] षड्भ्यः प्रकृताभ्यः।
अन्त्योऽर्धर्चः षण्णां स्तुतानां पूर्वा देवाः पादैः स्तुतिभिः स्तुताः[३] ॥१२५॥
भरद्वाजे गृत्समदे वसिष्ठे नोधस्य[ग] गस्त्ये विमदे नभाके[घ]।
कुत्सेनोदर्के[४] बहुदेवतेषु तथा द्विदेवेषु समानदेवधर्माः[५] ॥१२६॥

---

(१) गोतमो नाम य ऋषिः कुत्स आङ्गिरस इति क॰ घ॰ च॰।

(२) वाचेत्यत्र स्तुतापा इति क॰ घ॰, स्तुताप्रो इति च॰।

(३) ङ॰ चिह्नितपुस्तके पुस्तकान्तरे च,—

इमं कुत्स आङ्गिरसो ददर्श जातवेदसम्।
कुत्साद्दीर्घतमास्त्वेतमध्ये तारक्वधीयते॥
पूर्व्वा देवास्ततो देवास्त्रिभिः पादैस्तु संस्तुताः।
षोडशर्चं तथा सूक्तं जगाद चतुरित्यसौ।
अन्त्येऽर्द्धर्चे तु वा षसां लिङ्गोक्तानां स्तुतौ गणः॥

इति पाठो वर्त्तते।

क॰ घ॰ च॰ चिह्नितपुस्तकेषु, कुत्साद्दीर्घतमास्त्वेतीति श्लोकार्द्धस्थाने कुत्साद्दीर्घतमा इति ते द्वे एवमधीयते। इति पाठोऽस्ति। इतीत्यत्र पुस्तदिति ग॰।

(४) कुत्सेनोदर्केति क॰ घ॰ च॰।

(५) समानधर्म्मिणः इति ख॰ ग॰ ङ॰ पुस्तकान्तरञ्च।

---

(क) ऋ॰ १, ८८, १। (ख) ऋ॰ १, १०६, ६। (ग) ऋ॰ १, ६१, १४। (घ) ऋ॰ ८, ४०, ४।

द्वे विरूपे सूक्तमौषसाग्नये[१] सप्तग्नये[क]ति द्रविणोदसेऽग्नये ।
वैश्वानरस्येति[२] वैश्वानरीयमुक्तमस्मात्पूर्वं शुचयेऽग्नये पुनः ॥१२७॥
जातवेदस्यं सूक्तसहस्रमेक ऐन्द्रात्पूर्वं कश्यपार्षं वदन्ति ।
जातवेदसे सूक्तमाद्यन्तु तेषामेकभूयस्त्वं मन्यते शाकपूणिः ।१२८॥
दृचाद्या[३] सहस्रर्चान्तं सूक्तं नानाविधं भवेत् ।
नवनवतिः पञ्चलचा ऋचः स्युः सचतुःशतम् ॥१२९॥
नानादैवतमेकार्षं छन्दोभिस्त्रिचमुत्पथम्[४] ।
[५]सयोवृषेन्द्राणि पञ्च वैश्वदेवानि चन्द्रमाः १३०॥
चौष्णेन्द्राग्नेय इन्द्राग्नी ततमित्यार्भवे परे ।
चितं[ख] गास्त्वनुगच्छन्तं क्रूराः शाला[६] वृकी[ग] सुताः ॥१३१॥

---

(१) औषस्यमग्निर्वेति ङ० पुस्तकान्तरं ।
(२) वैश्वानरस्येति ये इति ग० ।
(३) दृचाद्यमिति पाठः शुद्धः ।
(४) वैश्वानरस्येति वैश्वानरीयमित्यादि छन्दोभिस्त्रिचमुत्पथमित्यन्तपाठः क० घ० च० चिह्नितपुस्तकेषु न विद्यते । जातवेदस्यं सूक्तसहस्रमित्यादि छन्दोभिस्त्रिचमुत्पथमित्यन्तपाठः ग० चिह्नितपुस्तके न दृश्यते । दृचाद्या सहस्रर्चान्तमित्यादि छन्दोभिस्त्रिचमुत्पथमित्यन्तपाठः ख० चिह्नितपुस्तके नेष्यते ।
(५) क० घ० च० चिह्नितपुस्तकेषु सयोवृषेन्द्राणीति श्लोकार्द्धात् प्राक्, अयनः शुचयेऽग्नये वैश्वानरीयं जातवेदस इति जातवेदस्यम् । इत्यधिकं पठितम् ।
(६) शालेति ग० ङ० ।

---

(क) ऋ० १, ९९, १ । (ख) ऋ० २, ३४, १० । (ग) ऋ०१,११७, १८।

कूपे प्रक्षिप्य गाः[१] सर्वास्तत एवापजह्रिरे[२] ।
स तत्र सुषुवे सोमं मन्त्रवि[३]न्मन्त्रवित्तमः ॥१२२॥
देवांश्चावाहयन् सर्वांस्तच्छुश्राव बृहस्पतिः ।
आगच्छतोऽथ तान् दृष्ट्वा क वसत्यस्य तत्त्वतम् ॥१२३॥
सर्व्वं दृष्ट्वा च वरुणस्यार्य्यम्णः इत्युपालभत् ।
कूपेष्टकाभिर्म्रणितान्यङ्गान्येवाभवन्मम ॥१२४॥
दृष्ट्वा सर्व्वानहं स्तौमि यद्यप्येको न पश्यति[४] ।
बृहस्पतिप्रचोदिता विश्वेदेवगणास्तथः ॥१२५॥
जग्मुस्ते[५] तस्य तं यज्ञं भागांश्च जगृहुः सह ।
बृहस्पति[६]स्त्रितस्यैतत्[७] ज्ञानं विज्ञानमेव च ॥१२६॥
दृष्टेनाग्न्येन सूक्तेन जगादर्षिरसाविति ।
द्यावापृथिव्यावीलेति आग्नेयः[८] पाद उत्तरः ॥१२७॥
आश्विनः सूक्तशेषः स्यादिदं रात्र्युषसोः स्तुतिः ।

---

(१) ताः इति ख० ग० ङ० पुस्तकान्तरञ्च ।

(२) एवाप्य जह्रिरे इति ङ० पुस्तकान्तरञ्च ।

(३) तत्र सोमं सुषावासौ मन्त्रवदिति ङ० पुस्तकान्तरञ्च ।

(४) आगच्छतोऽथेत्यादि यद्यप्येको न पश्यतीत्यन्तपाठः क० ग० घ० च० चिह्नितपुस्तके नोपलभ्यते ।

(५) आजग्मुरिति ख० ङ० पुस्तकान्तरञ्च ।

(६) बृहस्पतेरिति ख० ङ० पुस्तकान्तरञ्च ।

(७) त्रितस्यैतमिति क० घ० च० ।

(८) द्यावापृथिव्योरीले चेत्याग्नेयः इति ङ० पुस्तकान्तरञ्च ।

इमा रौद्रं ततः[१] सौम्यं चित्रं पश्चाश्विनान्यतः ॥१३८॥
नासत्याभ्यामिति त्वन्ये अर्धर्गं दुःखप्ननाशिनी[२] ।
ऐन्द्रव[३]द्वैश्वदेवश्च प्रोषसे पृथुरुत्तरे ॥१३९॥
ऋषिर्दानश्च[४] भाव्यस्य[क] प्रातरित्यृच शंसति ।
कक्षीवता[ख] विदित्वेति[५] यदैन्द्रमुपदिश्यते ॥१४०॥
परोक्षं वैश्वदेवं[६] तत् प्रदिष्टं स्वरसामसु ।
अधिगम्य गुरोर्विद्यां गच्छन् स्वनिलयं प्रति ॥१४१॥
कक्षीवानध्वनि श्रान्तः सुष्वापारण्यगोचरः ।
तं राजा स्वनयो नाम भावयव्यसुतो[७]ऽव्रजन् ॥१४२॥
क्रीड़ार्थं सानुगोऽपश्यत् सभार्यः सपुरोहितः ।
अथैनं रूपसम्पन्नं दृष्ट्वा देवसुतोपमम् ॥१४३॥
कन्यादाने मतिं चक्रे वर्णगोत्राविरोधतः ।
सम्बोध्यैनं स पप्रच्छ वर्णगोत्रादिकं तदा ॥१४४॥
राजन्नाङ्गिरसोऽस्मीति कुमारः प्रत्युवाच तम् ।

(१) परमिति क० घ० च० ।

(२) त्वन्येऽन्या दुःखप्ननाशिनीति क० ग० घ० च० ।

(३) ऐन्द्रवदिति ङ०, ऐन्द्रं वेति च० ।

(४) त्विति ङ० ।

(५) कक्षीवतं कदित्यातीति क० ग० घ० च० ।

(६) परोक्षे वैश्वदेवे इति ङ० ।

(७) भावयव्यसुत इति ङ० ।

(क) ऋ० २, १२६, १ । (ख) ऋ० १, ११७, ६ ।

पुत्त्वोऽहं दीर्घतमस औचथ्यस्य[क] ऋषेर्नृप[१] ॥१४५॥
अथास्मै स ददौ कन्यां[२] दिव्याभरणभूषिताम्[३]।
तावतश्च रथानश्वान् शोणकान् वै[४] चतुर्युजः ॥१४६॥
वधूनां वाहनार्थाय धनकूप्य[५]मजाविकम् ॥
निष्काणां वृषभाणाञ्च[६] शतं शतमदात्पुनः ॥१४७॥
गवां सहस्रं षष्टीश्च सर्वाः खल्वरिधायसः[७][ख]।
शतमश्वाच्छतं निष्कान्यथान् दशवधूमतः ॥१४८॥
चतुर्युजो गवाश्चैव सहस्रं षष्ट्यधिकम्[८]।
स्वनयाद्भावयव्याच्च: कक्षीवान् प्रत्यपद्यत ॥१४९॥
प्रतिगृह्य च तुष्टाव प्रातः[९] पित्रे शशंस च ॥
एतदुत्तरसूक्तेन शतमित्यादिनोदितम्[१०] ॥१५०॥

(१) राजन्नाङ्गीरसोऽस्मीत्यादि औचथस्य ऋषेर्नृपेत्यन्तपाठः ड० चिह्नितपुस्तके न दृश्यते।
(२) कन्याः इति ड०।
(३) दशभारसमन्विताः इति ड०।
(४) रथांश्चास्य शोभिनोऽश्वैरिति ड०।
(५) धनं कूप्यमिति ड०।
(६) निष्काणां शतमश्वानामिति ड०।
(७) गवां सहस्रमिति श्लोकार्द्धं ड० चिह्नितपुस्तके न विद्यते।
(८) षष्ट्युपाधिकमिति ड०।
(९) ततः इति ड०।
(१०) ड० चिह्नितपुस्तके, एतदुत्तरसूक्तेनेति श्लोकार्द्धस्थले, एतस्मादुत्तरे सूक्ते शतमित्यादि चोच्यते इति पाठोऽस्ति, शतमश्वाच्छतं निष्कानिति श्लोकार्द्धात्प्राक् पठितश्च।

(क) ऋ० १, १५८, १। (ख) ऋ० १, १२६, ५।

फलप्रदर्शनं तस्य क्रियते प्रायशस्त्विह ।
द्वितीयान्तु पितापश्यत्सुगु[क]रित्यादिकामृचम् ॥१५१॥
कक्षीवतं[१] सर्व्वमिति भगवानाह शौनकः ।
एषा तु दैर्घतमसी सानुलिङ्गा कथं भवेत् ॥१५२॥
उच्यते प्रातरि[ख]त्सूक्ते सूनोर्दानेन हर्षितः ।
राज्ञस्त्वाशिषमाद्याथ सुगुरित्यादिना किल[२] ॥१५३॥
कर्माणि याभिः कथितानि राज्ञां[३]
दानानि चोच्चावचमध्यमानि ।
नाराशंसी[ग]रित्यृचस्ताः प्रतीया-
द्याभिः स्तुतिर्दाशतयीषु राज्ञां[४] ॥१५४॥
पश्चामन्दान् भावयव्यस्य गीता
जायापत्योर्द्वौ ऋचौ सम्प्रवादः[५] ।

---

(१) काक्षीवतमिति पाठः समीचीनः ।
(२) अधिगम्य गुरोर्विद्यामित्यादि सुगुरित्यादिना किलेत्यन्तपाठः क० घ० च० चिह्नितपुस्तकेषु न विद्यते। फलप्रदर्शनं तस्येत्यादि सुगुरित्यादिना किलेत्यन्तपाठोऽपि ख० ङ० चिह्नितपुस्तकयोर्न दृश्यते ।
(३) कर्म्माणि यावन्ति कृतानि राज्ञेति ङ० ।
(४) प्रतीयात् स्तुती दृष्टा यासु वरिष्ठराज्ञामिति ङ० पुस्तकान्तरञ्च ।
(५) सम्प्रवादो द्वृचेनेति क० घ० च० ॥

---

(क) ऋ० १, १२५, २ । (ख) ऋ० १, १, ४ । (ग) १०, ८५, ६ ।

सम्भवादं रोमशये[क]न्द्रराज्ञो-
रेते तृचौ[१] मन्यते शाकपूणिः ॥१५५॥
इन्द्रेण जायापत्योर्वेतिहासं
[२]तृचेऽस्मिन्मन्यते शाकटायनः ।
प्रादात्सुतां[३] रोमशां नाम नाम्ना
बृहस्पतिर्भावयव्याय राज्ञे ॥१५६॥

इति बृहद्देवतायां तृतीयोऽध्यायः ॥

---

(१) सम्भवादमस्यास्या अथ चैव ताभ्यामेते तृचौ इति ख० ङ० पुस्तकान्तरश्च ।

(२) तृचे इति ग० ।

(३) सं तामिति ख० ङ० ।

(क) ऋ० १, १२६, ७ ।

# अथ चतुर्थोऽध्यायः ।

ततस्त्व(१)मर्थं हरिवान्(क)विदित्वा
प्रियं सखायं स्वनयं दिदृक्षुः ।
अभ्याजगामाशु शचीसहायः
प्रीत्यार्च्चयत्तं(२) विधिनैव(३)राजा ॥ १ ॥

अभ्याजगामाङ्गिरसी च तत्र
दृष्ट्वा(४)तयोः सा चरणौ च वन्दे ।
इन्द्रः सखित्वादथ तामुवाच
रोमाणि ते सन्ति न सन्ति राज्ञि ॥२॥

सा बालभावादथ तां जगाद
उपोपमे अङ्ग परामृशेति ।
तां पूर्वयर्चाथ नृपः प्रहर्षा-
दभ्यव्रजत्सोऽथ पतिं तु साऽब्रवीत्(५) ॥३॥

---

(१) तत्सर्वमिति ख० ङ० पुस्तकान्तरञ्च ।

(२) प्रत्यर्चितं तमिति ख० ।

(३) प्रत्यर्चितोऽसौ विधिना चेति ङ० पुस्तकान्तरञ्च ।

(४) दृष्ट्वेति ख० ङ० पुस्तकान्तरञ्च ।

(५) तां पूर्वया सान्त्वयन्नृपः प्रहृष्टोवाच व्रजत्साय पतिं पतिव्रतेति क० घ० च० ।

---

(क) ऋ० १, ८१, ४ ।

अथाग्नेये अग्निमित्युत्तरे च-
त्यग्नेन्द्राणि प्रत[क]दैन्द्रयुगच[1] ।
युवन्त[ख]मिन्द्रापर्वतौ[ग] सह स्तुता-
विन्द्रन्तु मेने यास्क एकं प्रधानं[2] ॥४॥
स्तूयेतच्चः पर्वतो विद्धि वज्रो[3]
द्विवस्तुतौ चेन्द्रमाह[4] प्रधानं ।
आत्मावयोरथ पञ्चेन्द्रवाय्वो[5]रेका
वायोरुत्तरं द्विप्रधानं ॥५॥
तत्र पञ्चवरुणं मित्रदेवा
द्विवादिभ्यः[6] कथिताभ्यः परे द्वे
द्वे द्वे पदे संस्तुते[7] रोदसी च
देवासार्धर्चेन विभक्तमन्यत् ॥६॥

(१) अग्निमाग्नेये अत उत्तराणि पञ्चेन्द्राणि प्रतदैन्द्रयुगेकेति ङ० पुस्तकान्तरच ।

(२) त्विन्द्रन्तु मेन इह यास्कः प्रधानमिति क० घ० च० ।

(३) स्तुयुत्ततः पर्वतञ्च यज्ञः इति क० घ० च० ।

(४) चन्द्रमाऊरिति क० घ० च० ।

(५) आत्मानवपञ्चेन्द्रवाय्वोरिति क० घ० च०, आत्मावायोश्चाथ पञ्चेन्द्रवाय्वोरिति ग० ।

(६) द्विभ्य आद्याः इति ङ० ।

(७) द्वे वायरे संस्तुताविति ङ० ।

(क) ऋ० ८, १२, २७ । (ख) ऋ० ८, ७१, ४ । (ग) ऋ० ३, ५३, १ ।

मैत्रावरुणं सुषुमे(क)ति सूक्तं(१)
प्रप्र(ख)पोष्णं वैश्वदेवं द्वितीयं(२)।
एतत्सूक्तं(३) वैश्वदेवं तृतीयं
वैश्वदेवं स्या(४)द्बहुदेवतेषु ॥७॥
बहुष्वस्तु वैश्वदेवेषु संस्तवः(५)
अर्धर्चा(६) द्वैपदास्त्रैपदाश्च।
द्विप्रधाना अपि चैकप्रधाना
बहुप्रधाना अपि वैश्वदेवाः(७) ॥८॥
वैश्वदेवी मित्रावरुणी द्वितीया
तिस्रोऽश्विभ्यां तत ऐन्द्री ततोऽग्नेः।
मारुत्येका तत ऐन्द्राग्न्यनन्तरा
बार्हस्पत्या चोत्तमा स्तौति देवान् ॥९॥

---

(१) सुषुमेतीह सूक्तमिति ख०, ग० ङ० पुस्तकान्तरञ्च।
(२) तृतीयमिति क० घ० च०।
(३) अस्तु औषदिति ङ०।
(४) वैश्वदेवं हि स्यादिति ङ०।
(५) संस्तुवः इति क० घ० च०।
(६) अर्धर्चाविति क० घ० च०।
(७) अपि ता वैश्वदेव्यः इति ङ० पुस्तकान्तरञ्च।

---

(क) ऋ० १, १३७, ९। (ख) ऋ० १, ४०, ७।

अथोर्णुषिर्वा स्तौति ह्यग्नेऽस्मा-
मात्मानं वा तेषु यं मन्त्रजन्म[१]।
तस्मादेतां विप्रवदन्ति केचित्
इन्द्राग्नी तस्यां तु[२] निपातभाजौ ॥१०॥
द्वावुचथ्य[क]बृहस्पती ऋषिपुत्रौ बभूवतुः।
आसीदुचथ्यभार्या तु ममता नाम भार्गवी ॥११॥
तां यवीयान्[३] बृहस्पतिर्मैथुनायोपचक्रमे।
शुक्रस्योत्सर्गकाले तु गर्भस्तं प्रत्यषेधत[४] ॥१२॥
इहास्मिन् पूर्वसम्भूतो न कार्य्यः शुक्रसङ्करः।
तच्छुक्रप्रतिषेधं तु न ममर्ष बृहस्पतिः[५] ॥१३॥
स व्याजहार तं गर्भं तमस्ते दीर्घमस्त्विति।
स च दीर्घतमा नाम बभूवर्षिरुचथ्यजः ॥१४॥
स जातोऽत्यतप[६]ल्लोकानेतस्मा[७]दन्धतां गतः।

(१) एवाथर्व्वाणः स्तौति प्रशंस जन्मेति क॰ घ॰ च॰। एवाथर्व्वाण इत्यत्र अहमेवाथर्व्वाणः इति ग॰।
(२) केचिदैन्द्री त्वेवेति क॰ घ॰ च॰।
(३) कनीयानिति क॰ घ॰ च॰।
(४) प्रत्यभाषतेति क॰ ग॰ घ॰ च॰।
(५) तं शुक्रप्रतिष्ठानं तु बृहस्पतिरमर्षयदिति ख॰।
(६) अभ्यतपदिति ख॰ घ॰, अभ्यवददिति ग॰ ङ॰ पुस्तकान्तरञ्च।
(७) चकस्मादिति ख॰ ग॰ ङ॰।

(क) ऋ॰ ८, ४६, २८।

दधुर्देवा सुता मेने ततोऽनन्धो बभूव च[१] ॥१५॥
स वेदिषद इत्यस्तौ[२] चतुर्भिर्जातवेदसं।
समिद्ध आप्रियोऽन्यैन्द्री तमित्यग्नेः पराणि षट्[३] ॥१६॥
स्तुतौ तु मित्रावरुणौ सूक्तैर्मित्रमिति त्रिभिः।
मित्रं मैत्री वदत्येता[४] माधेनवश्च शंसति ॥१७॥
अदितिं वाथ वाप्यग्निं तथा रूपं हि दृश्यते।
अग्निं मेने दितिं त्वेव कुत्से चेह[५] च शौनकः ॥१८॥
ऋषिरत्र प्रसङ्गाद्वा दर्शनादानुकीर्तयेत्[६]।
विष्णोर्नुकमिति त्रीणि वैष्णवानि पराण्यतः ॥१९॥
प्रवः पान्तं चतुर्भिस्तु[७] इन्द्राविष्णू सह स्तुतौ।
गृह्याणि वा वैष्णवानि ऋषिस्त्वेत्यृचि[८] कांचति ॥२०॥

---

(१) तु तस्यास्तौ नैते न त्वन्धतां गत इति क० ग० च०।

(२) इत्याद्यैरिति ङ०।

(३) आप्रः परैन्द्री षड्भिः त्वग्निं तमित्यत इति क० घ० च०, आप्रि-त्योन्यैन्द्री प्राप्तावाग्नेः पराणि चेति ग०।

(४) मैत्रीव देव्येतामिति ङ०।

(५) यास्कः कुत्सो वेहेति ङ० पुस्तकान्तरञ्च।

(६) ऋषिरग्नेः प्रसक्तत्वाद्दृष्टाग्नीनन्वकीर्तयदिति ङ०।

(७) प्रवश्चतसृभिर्ऋग्भिरिति ग०, तावां चतसृभिर्ऋग्भिरिति ङ० पुस्तकान्तरञ्च।

(८) तावामित्यृचीति ग० ङ० पुस्तकान्तरञ्च।

जीर्णन्तु दीर्घतमसं सिषिचुस्तत्परिचारिणः[१]।
दासा अथ[२] नदीतोये क्षिप्त्वैनमुपादधुः[३] ॥२१॥
तत्रैकस्त्रैतनो[४][क] नाम शस्त्रेणैनमपाहनत्।
शिरस्यंसावुरस्यैव स्वयमेव न्यकृन्तत[५] ॥२२॥
अङ्गदेशसमीपे तु नद्यः सर्वाः समुत्क्षिपन्[६]।
[७]जनयामास चोत्थाय[८] कक्षीवत्प्रमुखानृषीन् ॥२३॥

---

(१) तत्परिचारकाः इति ख० ङ० पुस्तकान्तरञ्च।
(२) दासा मध्येति क० घ० च०।
(३) अवादधुरिति क० घ० च०।
(४) त्रैतनः इति क० घ० च०।
(५) ख० ङ० पुस्तकयोः पुस्तकान्तरे च,—

हत्वा दीर्घतमास्तं तु पापेन महता हतम्।
आत्माङ्गान्यनुदचैव ततोऽदान्मोहितो भ्रमम्॥

इत्यधिकं पठितम्।
(६) तं नृपं समुदक्षिपदिति ङ० पुस्तकान्तरञ्च।
(७) जनयामास चोत्थायेति श्लोकार्द्धात्प्राक्, ख० ङ० पुस्तकयोः पुस्तकान्तरे च,—

अङ्गराजस्त्वे युक्ता मुशिजं पुत्रकाम्यया।
राज्ञा च प्रहितां दासीं मत्वा महातपाः॥

इत्यधिकं पठितम्।
(८) सोऽजीजनद्दृप्रसैकादिति ख० ङ० पुस्तकान्तरञ्च।

---

(क) ऋ० १,।१५८, ५।

तुष्टाव चैव सूक्ताभ्या[१]मवोधीत्यश्विनावृषिः।
प्रेति द्यावापृथिव्यौ तु[२] पराभ्यामेतदुत्तरं ॥२४॥
किमाभर्वं परं[३] मानो मेध्यस्याश्वस्य संस्तवः।
ईर्मां[क]ता स इति त्वस्यां नीयमानं प्रशंसति ॥२५॥
स्वयूथ्यास्तस्य चैवात्र बहवः संस्तुता हयाः।
नियुक्ताश्चानियुक्ताश्च प्रसङ्गादनुकीर्त्तिताः ॥२६॥
संज्ञप्तवदसंज्ञप्तं हविष्यं[ख] चाह सूनवः[४]।
तस्मिन्मांसस्य सूनस्य चतुर्णां हविषस्तथा[५] ॥२७॥
वासोऽधिवाससोश्चात्र स्वधिते[ग]श्च प्रकीर्त्तनं[६]।
गात्रशूलस्थूणाना[घ]श्च[७] स्वधितेश्च प्रकीर्त्तनं[८] ॥२८॥

---

(१) वेति वस्तुताभ्यामिति ङ० पुस्तकान्तरम्।
(२) द्यावापृथिव्यातेति ङ० पुस्तकान्तरम्।
(३) परे इति ङ० पुस्तकान्तरम्।
(४) भविष्यं चाह भूतवत् इति ख० ङ० पुस्तकान्तरम्।
(५) चतुर्णां हविषस्तथेति ग०, तत्सौनस्य च मांसस्य चतुर्णां च विषा-
स्तथेति ङ० पुस्तकान्तरम्।
(६) यद्दिग्रस्य च कीर्त्तितमिति ख० ग०, वासाधिवाससोश्चात्र यद्गीयस्य
च कीर्त्तनमिति ङ०।
(७) गात्रसूलस्थुणायाश्चेति ख० ङ०।
(८) क० घ० च० चिह्नितपुस्तकेषु, गात्रसूलस्थूणानाञ्चेतिश्लोकार्द्धं न
पठितम्।

---

(क) ऋ० ४, २७, २। (ख) ऋ० १, १६२, ४। (ग) ऋ० १, १६२, १८। (घ) ऋ० ५, ६२, ७।

भागस्य[1] कीर्त्तनं चात्र इन्द्रापूष्णोः सह स्तुतिः[2] ।
सूक्तं यदस्य[3] वामीयं वैश्वदेवं तदुच्यते ॥२९॥
प्रवादा विविधास्तत्र देवानां चात्र कीर्त्तनं ।
अग्निस्तु वामः पलितो[क] वायुर्भ्राता तु मध्यमः ॥३०॥
घृतपृष्ठ[ख]स्तृतीयोऽत्र[4] सप्त वै रश्मयस्तु ताः ।
पराश्च कथयन्त्यग्निं[5] यथा वर्षति पाति[6] च ॥३१॥
अहोरात्रदिना[7]न्मासानृतूंश्च परिवर्त्तनं[8] ।
पञ्चधा त्रिविधा[9] चैव षोढा द्वादशधैव च[10] ॥३२॥
संवत्सरं चक्रवच्च पराभिः कीर्त्तयन्नृषिः ।

(१) छागस्येति ग० छ०
(२) इन्द्रापूष्णोश्च कीर्त्तनमिति ख० ङ० ।
(३) यदस्येति छ० ।
(४) तृतीयोत्तः इति छ० ।
(५) चग्निरिति छ० ।
(६) वातीति ख० छ० ।
(७) अहोरात्रान् दिनानिति छ० ।
(८) पक्षांश्च परिकीर्त्तनमिति छ० ।
(९) पञ्चधा च त्रिधेति ख० ङ० ।
(१०) द्वादशधापि चेति छ० ।

(क) ऋ० १, १४४, ४ । (ख) ऋ० १, १६४, १ ।

क्षेत्रज्ञानं[१] च धेनुश्च गौरीं वाचं सरस्वतीं ॥२३॥
धर्मं पूर्व्वयुगीयञ्च[२] साध्यान् देवगणांस्तथा।
विविधानि च कर्म्माणि त्वग्निवायुविवस्वताम् ॥२४॥
विभूतिमग्नेर्वायोश्च जगती स्थान[३]जङ्गमे।
हरणं रश्मिभिश्चैव[४] विसर्गं[५] पुनरेव च ॥२५॥
कर्म्मानुकीर्तनञ्चाप[६] पर्जन्याग्निविवस्वतां।
मातापुत्रौ तु वाक्प्राणौ माता वागितरः सुतः ॥२६॥
सरस्वन्तमिति प्राणा[७] वाचं प्राहुः सरस्वतीं।
शरीरमिन्द्रियैर्युक्तं क्षेत्रमित्यभिधीयते ॥२७॥
वेद तत्प्राण[८] एवैकस्तस्मात् क्षेत्रज्ञ उच्यते।
मेघः[९] शक[क] स्तस्य धूमः[१०] सलिलं वाय एव वा ॥२८॥

---

(१) क्षेत्रज्ञानमिति ग०, क्षेत्रं ज्ञानमिति ङ०।
(२) पूर्व्वयुगानाञ्चेति ख० ङ०, धर्म्मपूर्व्वयुगौ पञ्चेति ग०,
(३) जगति स्थास्वितति ख० ङ०।
(४) वारः इति ख०, वारामिति ङ०।
(५) विसर्पमिति ख०।
(६) चास्येति ख० ङ० पुस्तकान्तरञ्च।
(७) प्राणः इति क० ग० घ० च०।
(८) वेत्त्येतस्माच्च इति ङ०।
(९) मेघे इति ख०।
(१०) धूमे इति ख०।

---

(क) ऋ० ८, ८०, १।

सोम उषा[क]भवन्नस्य पावकाश्च यथोऽधिपाः।
गौरीरं तं वैश्वदेवमुपरि स्यात्पृथक् स्तुतिः ॥३९॥
इन्द्रं मित्रमिमौ सौर्यौ सौरी चान्या सरस्वते[१]।
मारुतेन्द्रस्तु संवादः कयेति[२] परमः स्मृतः[३] ॥४०॥
मरुतामयुज[४]स्तेभ्यो युग्माः सर्व्वाः[५] सदान्यथा।
एकादशी प्रथमा च मारुतस्तृच उत्तमः[६] ॥४१॥
इन्द्रस्यैव तु तत्रोक्तं कर्म्मत्वमितरस्य तु।
इतिहासं पुरावृत्तमृषिभिः परिकथ्यते[७] ॥४२॥
समागच्छन्मरुद्भिस्तु[८] चरन् व्योम्नि शतक्रतुः।

(१) क० ख० घ० च० पुस्तकेषु, मेघः प्रकृतस्य धूम इत्यादि सौरी चान्या सरस्वते इत्यन्तपाठो न विद्यते, तेषु च अत्र स्थले,—
सूक्तमस्यपस्तवं त्वेतत्प्राधानमेव प्रशंसति।
प्रवादवक्तृत्वाच्च ततः सलिलमुच्यते॥
इति पाठो वर्त्तते।
(२) कयेतीति ख०।
(३) ततः इति ख० ङ०।
(४) मरुत्तः इति ङ०।
(५) तत्रेति ङ०।
(६) उत्तरः इति ग०, मारुत्यस्तिस्त्र उत्तरा इति ङ० पुस्तकान्तरञ्च।
(७) इन्द्रस्यैव तु तत्रोक्तमित्यादि ऋषिभिः परिकथ्यते इत्यन्तपाठः क० ग० घ० च० चिह्नितपुस्तकेषु नेष्यते।
(८) चेति ख० ङ०।

(क) ऋ० १, १४६, २।

दृष्ट्वा तुष्टाव तानिन्द्रस्तेनेन्द्र[1]मृषयोऽब्रुवन् ॥४३॥
तेषामगस्त्यः संवादं तपसा वेद[2]तत्त्वतः।
स तानभिजगामाशु निरुप्येन्द्रं हविस्तदा ॥४४॥
मरुतश्चाभितुष्टाव सूक्तैस्तदिति च[3] त्रिभिः[4]।
महश्चिदिति चैवेन्द्रं सहस्रमिति चैतया[5] ॥४५॥
निरुप्तं तद्धविश्चेन्द्रं मरुद्भ्यो दातुमिच्छति[6]।
विज्ञायावेक्ष्य तद्धव्यं लिन्द्रो[7] नेति तमब्रवीत्[8] ॥४६॥
न श्वो नाद्यतनं ह्यस्ति वेद कस्तद्यदद्भुतं।
कस्यचित्त्वथ सञ्चारे[9] चित्तमेव विनश्यति ॥४७॥
किन्न इत्यब्रवीदिन्द्रमगस्त्यो भ्रातरस्तव।
मरुद्भिः सम्प्रकल्पस्व[10]वधीर्मा च[11] शतक्रतो ॥४८॥

---

(१) ते चैन्द्रमिति ख० ग० ङ० पुस्तकान्तरञ्च।
(२) तपसावोधीति ख० ङ० पुस्तकान्तरञ्च।
(३) तन्विति त्रिति क० घ० च०।
(४) तन्विति पञ्चभिरिति ग०।
(५) महश्चिदित्यनेनेन्द्रं सहस्रं त ऋचाच्ययमिति ख० ङ० पुस्तकान्तरञ्च।
(६) इच्छथेति ख०, इच्छतः इति ङ० पुस्तकान्तरञ्च।
(७) तद्भावमिन्द्रः इति ख० ङ० पुस्तकान्तरञ्च।
(८) ततोऽब्रवीदिति ख० ङ० पुस्तकान्तरञ्च।
(९) त्वथसञ्चारे इति ख० ङ० पुस्तकान्तरञ्च।
(१०) सम्प्रकल्पस्वेति ख० ङ०॥
(११) मा नः इति ख० ङ० पुस्तकान्तरञ्च।

किं नो भ्रातरिति त्वयामिन्द्रो मान्यमुपालभत् ।
अगस्त्यस्त्वरमित्यस्यां क्रुद्ध[१]मिन्द्रं प्रशामयत्[२] ॥४९॥
प्रादात्संवननं[३] कृत्वा तेभ्य एव च तद्धविः ।
पूर्व्वया सान्त्वयन्निन्द्रो ह्यगस्त्यं खेदकाम्यया ॥५०॥
एवं संवननं कृत्वा प्रादात्तेभ्यः स तद्धविः[४] ।
सुते[५] चकार सोमे च[६] तानिन्द्रः सोमपीथिनः[क] ॥५१॥
तस्माद्दिव्याभिपातेन[७] ऐन्द्रेषु[८] मरुतस्तु तान्[९] ।
प्रीतात्मा पुनरेवर्षिस्तांस्तुष्टाव पुनः पृथक्[१०] ॥५२॥
मरुतः प्रेति सूक्ताभ्या[११]मिन्द्रं षड्भिः परैस्तु सः[१२] ।

(१) क्रुद्धमिति ख० ङ० पुस्तकान्तरञ्च ।
(२) प्रसादयदिति ख० ङ०. प्रसाधयदिति पुस्तकान्तरम् ।
(३) सङ्गमनमिति क० ग० घ० च० ।
(४) पूर्व्वया सान्त्वयन्निन्द्र इत्यादि स तद्धविरित्यन्तपाठः, क० घ० च० चिह्नितपुस्तकेषु न दृश्यते ।
(५) सूते इति ग० ।
(६) सोमेऽथेति ख० ङ० पुस्तकान्तरञ्च ।
(७) निपातेष्विति ङ० पुस्तकान्तरञ्च ।
(८) मन्त्रेष्विति ख० ।
(९) मरुतः स्तुताः इति ङ० पुस्तकान्तरञ्च ।
(१०) पृथक् पृथगिति ख० ङ० पुस्तकान्तरञ्च ।
(११) प्रतिसूक्ताभ्यामिति ख० ङ० पुस्तकान्तरञ्च ।
(१२) गायन् बहुभिः शचीपतिरिति ख० ङ० पुस्तकान्तरञ्च ।

(क) ऋ० १०, १५, ८ ।

ऋतुस्नाता[१] ऋषिर्भार्यां लोपामुद्रां यशस्विनीं ॥५३॥
उपजल्पितुमारेभे रहःसंयोगकाम्यया।
ताभ्यां सा त्वब्रवीदृग्भ्यां पूर्वीरिति चिकीर्षितं ॥५४॥
रिरंसुस्तामथागस्त्य उत्तराभ्यामतोषयत्।
विदित्वा तपसा सर्वं तयोर्भावं रिरंसतोः ॥५५॥
उक्तेनं[२] कृतवानस्मिन्[३] ब्रह्मचार्युत्तमे जगौ।
प्रशंस्य[४] तं परिष्वज्य गुरु मूर्ध्न्यवजिघ्रतुः ॥५६॥
स्मितेनमाहतुस्त्वोभावनागा असि[५] पुत्रक।
युवो[क]रजांसीति ततः सूक्तैः पञ्चभिरश्विनौ ॥५७॥
अगस्त्य एव तुष्टाव सूक्तेन कतरे तुण[६]।
द्यावापृथिव्यौ सूक्तेन आनो विश्वान् दिवौकसः ॥५८॥
पितु[ख]मन्नं समिद्धाग्न्यो अग्निमग्ने नयेति च[७]।
बृहस्पतेरनर्वाणं[ग] कंकतोपनिषत्परं[८] ॥५९॥
अपां तृणानां सूर्यस्य केचिदेतां स्तुतिं विदुः।

---

(१) ऋतौ स्नातामिति क० घ० च०।
(२) न त्वेनः इति ख० ग०, नत्वेतदि ङ० पुस्तकान्तरञ्च।
(३) चक्षीति ख० ग० ङ०।
(४) प्रशस्येति ग० ङ०।
(५] चोभौ ह्यनागोऽसीतीति क० ग० घ० च०।
(६) कतरेति परेयं त्विति क० घ० च०, सूक्तेन कतरेति त्वि ङ०।
(७) समिद्धो ह्याप्रियोऽग्ने च नयाग्नये इति ख० ङ० पुस्तकान्तरञ्च।
(८) परेति ख० ङ० पुस्तकान्तरञ्च।

---

(क) ऋ० १, ३४, १। (ख) ऋ० १, ६१, ७। (ग) ऋ० १, १०, १।

ददर्श तद्गतश्चो वा[१] विषन्नं विषमंकया ॥६०॥

अदृष्टाश्चो विश्वरूपः[२] सूक्तस्यांशोऽथ तु त्वृषः[३]।
असौ[४]कृत्स्नमदोऽग्निं त्वं[५] जातवेदस[६]माग्नियः ॥६१॥

यज्ञेनाथ समिद्धोऽग्निरतोऽग्निं[७] सप्तभिर्ऋषे[क]।
संयुज्य[८] तपसात्मानमैन्द्रं विभ्रन्महद्वपुः ॥६२॥

अदृश्यत मुहूर्त्तेन दिवि च व्योम्नि चैव च।
तमिन्द्रमिति मत्वा तु[९] दैत्यौ भीमपराक्रमौ ॥६३॥

धुनिश्च चुमुरिश्चैव[१०] सायुधावभिपेततुः।
विदित्वा स तयोर्भावमृषिः[११] पापचिकीर्षतोः ॥६४॥

यो जात इति सूक्तेन कर्म्माण्यैन्द्राण्यकीर्त्तयत्।

---

(१) त्विति ख० ङ० पुस्तकान्तरञ्च।
(२) अदृष्टाश्चो मष्टरूपः इति ख० ङ० पुस्तकान्तरञ्च।
(३) वृषः इति ग०।
(४) सौतीति ङ० पुस्तकान्तरञ्च।
(५) अग्नित्वमिति ग० ङ०।
(६) जातवेदस्यमिति ख० ग०।
(७) चातोऽग्निमिति क० घ० च०, अग्निरिति ङ०।
(८) संयोज्येति ख० ङ० पुस्तकान्तरञ्च।
(९) तौ इति ङ०।
(१०) चोभाविति ख० ङ० पुस्तकान्तरञ्च।
(११) कृषिरिति क० घ० च०।

---

(क) ऋ० १, १०, ७।

उक्तेषु[1] कर्मस्वेन्द्रेषु भीतस्तावाशु विवेश ह[2] ॥६५॥
इदमन्तरमित्युक्त्वा ताविन्द्रस्तु न्यवर्हयत् ।
निहत्य तौ गृत्समदमृषिं[3] शक्रोऽभ्यभाषत ॥६६॥
यथेष्टं मास[4]खे पश्य प्रियस्त्वं[5] ह्यागतोसि[6] मे ।
वरं गृहाण मत्तस्त्वमक्षय्यं[7] चास्तु ते तपः ॥६७॥
प्रह्व[8]स्तं प्रत्युवाचर्षिरस्माकं वदतां वरः[9] ।
तनूनामस्तु चारिष्टिर्वाक्चास्तु हृदयङ्गमा ॥६८॥
सुवीरा(क)रयिमन्त(ख)श्च वयन्त्वामिन्द्र धीमहि[10] ।
इन्द्र[11]त्वाश्च विजानीमो वयं अश्मनि[12] अश्मनि ॥६९॥

(१) कीर्त्येष्विति क० घ० च० ।

(२) भीतौ सुषुपतुस्तदेति ख० ङ० पुस्तकान्तरञ्च ।

(३) इदमिति ङ० पुस्तकान्तरञ्च ।

(४) मांसमिति पाठः सङ्गतः ।

(५) मास खे पश्य प्रियस्त्वमिति क० घ० च० । अत्र, मांसं खे पश्य प्रियस्त्वमिति पाठो विशुद्धः ।

(६) प्रियत्वं चागतोऽसीति ङ० ।

(७) मत्तश्चाक्षयमिति क० घ० च० ।

(८) प्रह्वः इति क० घ० च० ।

(९) वरेति क० ग० घ० च० ।

(१०) इन्द्र वामहे इति ख०, इन्द्रमीमहे इति ङ० ।

(११) इन्द्रमिति ङ० ।

(१२) ह्यश्मनीति क० ग० घ० च० ।

(क) ऋ० ६, १९, ५ । (ख) ऋ० १०, ७४, १ ।

त्वद्गत[1]स्त्वेव मे भावो मापगात्त्वद्रथीतरः[2] ।
निरुक्तं तदिदं चार्षमिन्द्रश्रेष्ठान्वृचान्वया ॥७०॥
वव्रे वरमिदं सर्व्वं तदाकर्ण्य शचीपतिः[3] ।
तथेत्युक्त्वा तुराषाट् त्वां[4] पाणौ जग्राह दक्षिणे ॥७१॥
ऋषिस्तस्य सखित्वेन पाणिना पाणिमस्पृशत् ।
सहितौ जग्मतुस्त्वेवं महेन्द्रसदनं[5] प्रति ॥७२॥
तत्रैनमार्हयत्प्रीत्या स्वयमेव पुरन्दरः ।
कर्म्मणा विधिदृष्टेन तमृषिस्त्वाभ्यपूजयत्[6] ॥७३॥
सखित्वाच्च पुनस्त्वेन[7]मुवाच हरिवाहनः ।
गृत्समादयसे यस्मात्त्वमस्मानृषिसत्तम ॥७४॥
तस्माद्गृत्समदो नाम शौनहोत्रो[8] भविष्यसि ।
ततो द्वादशभिः सूक्तैस्तुष्टावेन्द्रं शुधी[9][क]त्यृषिः ॥७५॥

---

(१) त्वां तत इति क० घ० च० ।
(२) मापगाच्च रथीतरः इति ख० पुस्तकान्तरञ्च ।
(३) निरुक्तं तदिदं चार्षमित्यादि तदाकर्ण्य शचीपतिरित्यन्तपाठः, क० ग० घ० च० चिह्नितपुस्तकेषु, नोपलभ्यते ।
(४) त्वामित्यत्र तमितिपाठः शुद्धः । रथाङ्गन्त्विति ख० ङ० पुस्तकान्तरञ्च ।
(५) महेन्द्रभवनमिति ख० ङ० पुस्तकान्तरञ्च ।
(६) वाभ्यपूजयदिति क० । तमृषिं चाभ्यपूजयदिति ख० ग० घ० च० ।
(७) एवमिति पुस्तकान्तरम् ।
(८) शौनकोऽत्र इति ख० ।
(९) इन्द्रशुधीत्यृषिरिति क० पुस्तकान्तरञ्च ।

---

(क) ऋ० २, २५, १९ ।

ददर्श संस्तुवन्नेव तत्र स ब्रह्मणस्पतिम्।
बृहस्पतिं तु तुष्टाव दृष्टलिङ्गाभिरेव च[१] ॥७६॥
स तमप्यभितुष्टाव[२] चतुर्भिरत[३] उत्तरैः।
गणानां विश्वमित्यस्यां[४] सहेन्द्राब्रह्मणस्पती ॥७७॥
बृहस्पतिं प्रसङ्गाद्वा[५] ब्रह्मणस्पतिमेव च[६]।
तुष्टाव कर्म्मणैकेन प्रभावस्यान्तरन्तयोः[७] ॥७८॥
मित्रावरुणद्यांयतुविजात[क]भगार्य्यम्णाम्[८]।
आदित्यानामिमाः [९]सूक्तमिदं वारुणमुच्यते[१०] ॥७९॥

---

(१) बृहस्पतिस्तु तुष्टाव दृष्टि लिङ्गस्तवैः सहेति ख०, दृष्टलिङ्गस्तवैः सहेति ङ०।

(२) अप्यभितुष्टावेति क० ख० ग० पुस्तकान्तरञ्च।

(३) चतुर्भिरिति उत्तरैरिति ग०, चतुर्भिरित उत्तरैरिति ङ०, चतु-र्भिरेत उत्तरैरिति पुस्तकान्तरम्।

(४) अस्या इति ङ०, विश्वामित्रस्येति ख०।

(५) प्रसङ्गत्वादिति ख० ङ०।

(६) ब्रह्मणस्पतिमेव वेति ङ०।

(७) द्वयोरिति ग०। श्लोकार्द्धमेतत् ख० ङ० चिह्नितपुस्तकयोर्नोपलभ्यते।

(८) तुविजातभगार्यमामिति ख०।

(९) इमाप्युक्तमिति ख०। इमाः इत्यत्र इदमिति पाठो विशुद्धः।

(१०) वरुणमिति ग०।

---

(क) ऋ० १, १३१, ७।

(१)घृतव्रता वैश्वदेवमृतमैन्द्रं परन्तु यत्(२)।
मघि क्रतुमिति त्वग्मिन्द्रासोमौ सह स्तुतौ ॥८०॥
सरस्वति त्वमित्यग्निमिन्द्रूर्द्धे मध्यमा तु वाक्(३)।
बृहस्पतिस्तु यो नस्तु(४) उत्तमा मरुतस्तुतिः(५) ॥८१॥
अस्माकं वैश्वदेवन्तु सूक्तादावुत्तमस्य तु(६)।
द्यावापृथिव्योर्द्वे त्वाद्यौ(७) तथैवैन्द्र्यौ(८) परे ततः ॥८२॥
द्वे द्वे राकासिनीवाल्योः षड्देव्योग्याःस्तथान्यया(९)।
(१०)रौद्रं मारुतन्तु परं(११)मा ते धारावरा इति ॥८३॥

---

(१) वाचनीयो न इत्याद्या दुःस्वप्नाद्यप्रणाशिनीः। श्लोकार्द्धमेतत् ग० चिह्नितपुस्तके घृतव्रतेति श्लोकात् पूर्व्वमधिकं पठितं।
(२) परं यत इति ख०, परं तत इति ङ०।
(३) माध्यमानुवागिति ख०।
(४) बृहस्पते स्तुतिर्यो मा इति ख०, यो न स्त इति ग०।
(५) बृहस्पते स्तुतिर्यो उ त्तमस्तु स्तुवतां स्तुतिः इति ङ०।
(६) अस्माकं वैश्वदेवं स्यात् सूक्तादावस्य चास्य ऋगिति ग०, स्यादस्या ऋक् चान्तिमास्य त्विति ङ० पुस्तकान्तरञ्च।
(७) ऋग्द्यावापृथिवीत्यृचेति क० घ० च०, द्यावापृथिव्योस्त्वाद्यौ वै इति ख०। वै इत्यत्र वा इति ग०।
(८) वाच चैन्द्र्या इति ग०, चैन्द्रौ वर्वौ इति ङ० पुस्तकान्तरञ्च।
(९) तथान्ययेति ग०, बह्वृग्वाद्यन्तया स्तुताः इति क० घ० च०।
(१०) ख० ङ० चिह्नितपुस्तकयोः पुस्तकान्तरे च रौद्रमित्यस्मात् पूर्व्वं, तत्पूर्व्वे द्वे ऋचौ कुह्वाः कुहूमहमिति स्तुते। तदुत्तरे द्वे अनुमतेरनुमो न्विति ते स्तुते। धातुस्तवस्त्वादौ धाता दधाति नो रयिम्(क)। इत्यधिकं पठितं।
(११) रौद्रं स्यात् परमारुतमिति पुस्तकान्तरम्।

---

(क) अ० १, १, ३।

वामदेवो मृगान् दृष्ट्वा विभ्यतोऽभ्य ऋषिः स्वयम्[१]।
[२]अपामपादुपेत्यत्र स्तुतः सूक्ते ततः[३] परे ॥८४॥
तुभ्यमित्यार्भवे[४] सूक्ते साविचादाश्विनम्परम्[५]।
सोमः पूषादितिश्चैव सोमापूष्णोन्यया स्तुताः ॥८५॥
वायव्ये[६] वैन्द्रवायव्या अन्यास्तु प्रउगा[क]स्तृचाः[७]।
प्रेत्यृक् स्तौति हविर्धाने अग्निस्तत्र निपातभाक् ॥८६॥
द्यावापृथिव्यौ द्यावेति हविर्धाने ततः परे।
[८]स्तुतिन्तु[९] पुनरेवैकामिन्द्रो भूत्वा कपिञ्जलः ॥८७॥

---

(१) वामतस्तु मृगान् स्तौत्यध्वनि निप्रस्थितांस्तु हि। इति क॰ घ॰ च॰, मृगं दृष्ट्वेति ग॰।
(२) ग॰ ङ॰ चिह्नितपुस्तकयोः पुस्तकान्तरे च अपान्नपादित्यस्मात् पूर्व्वं स्तुहि श्रुतमिति तस्यां रुद्रमस्तौत्प्रसादयन्नित्यधिकं पठितं।
(३) स्तत इति पुस्तकान्तरम्।
(४) इत्यार्तवे इति ख॰ ङ॰ पुस्तकान्तरञ्च।
(५) श्लोकार्द्धमेतत् ग॰ चिह्नित पुस्तके नोपलभ्यते।
(६) वायव्ये इति ग॰।
(७) वायव्ये चैन्द्रवायवी पश्चाय प्रउगास्तृचा इति क॰ ग॰ घ॰ च॰।
(८) ङ॰ चिह्नितपुस्तके पुस्तकान्तरे च स्तुतिमिति श्लोकार्द्धात् प्राक्, वाक्स्तोयो म इत्येषा दुःखप्राप्यप्रयाग्निनीति श्लोकार्द्धमधिकं दृश्यते।
(९) स्तुतमिवति ख॰।

---

(क) ऋ॰ १०, १३०, ३।

अपेर्जिगमिषोरात्रौ ववाग्ना[क]स्याथ[१] दक्षिणाम्।
स तमार्षेण सम्प्रेक्ष्य चक्षुषा पक्षिरूपिणम्।
पराभ्यामभितुष्टाव सूक्ताभ्यान्तु कनिक्रदत्[ख] ॥८८॥

प्रगाय गायंस्तपसाऽभ्यगच्छ[२]-
द्दृष्टर्षितामेकशतश्च पुत्रान्।
स गाधिपुत्रस्तु जगाद सूक्तं
सोमस्य मेत्याग्नेयं यत्परश्च[३] ॥८९॥

वैश्वानरीयेति[४] समित्समिद्वा
प्रोदे आग्नेये[५] उत्तरे त्वच[६] सूक्ते।
द्यावापृथिव्यौ तु निपातभाजा[७]
वापोऽथ देवाः पितरश्च मित्रः[८] ॥९०॥

आग्नेयेषु दृश्यन्ते स्तुतास्तु[९]-

(१) ववासे प्रतीति ख० ङ० पुस्तकान्तरञ्च।
(२) अध्यगच्छन्निति ङ० पुस्तकान्तरञ्च।
(३) नेत्यग्नये तत्परे चेति ख० ङ० पुस्तकान्तरञ्च।
(४) वैश्वानरीयेऽथेति ख० ङ० पुस्तकान्तरञ्च।
(५) प्रियो हे चेति ख० ङ० पुस्तकान्तरञ्च।
(६) त्वस्येति ख० ङ० पुस्तकान्तरञ्च। उत्तरेत्यत्रेति ग०।
(७) द्यावा पृथिव्या उभसो निपाता इति ख० ग० ङ० पुस्तकान्तरञ्च।
(८) आपोऽथ देवा पितरोऽथ मित्र इति ख० ग० ङ० पुस्तकान्तरञ्च।
(९) क० घ० च० चिह्नितपुस्तकेषु स्तुतास्तु इत्यत्र तु इति पाठो न दृश्यते।

(क) ऋ० ३, २, २। (ख) ऋ० १, १२८, १।

वैश्वानरो वरुणो जातवेदाः।
स्तूयेतैका यत्र यत्रास्तुतिर्वा[१]
नैपात्यांस्तां[२]स्त्रोपमार्थांश्च[३] विद्यात् ॥९१॥
राजर्षयो गृत्समदा वसिष्ठा
भरद्वाजाः कुशिको गौतमाश्च।
विश्वेऽश्विनावङ्गिरसोऽत्र योऽदिति-
र्भौजाः कण्वो[४] भृगवो रोदसी दिशः ॥९२॥
सावित्रसौम्याश्विन[५]मारुतेषु
ऐन्द्राग्नेये रौद्रसौर्य्यौषसेषु[६]।
आदावन्ते सूक्तमध्ये स्तुतास्तु[७]
न व्याप्नन्ति देवताः सूक्तभाजः[८] ॥९३॥
अग्नेः सप्तदशोऽध्याय ऊर्द्ध ऊषुण ऊतये[क]।

(१) एको यत्र तत्रान्यस्तुतिर्वेति ख० ङ० पुस्तकान्तरञ्च।

(२) निपातयथाः इति क० ग० घ० च०।

(३) उपमार्थांश्चेति पाठः साधुः।

(४) कल्पा इति ख० ङ० पुस्तकान्तरञ्च।

(५) सौर्य्याश्विनेति ख० ङ० पुस्तकान्तरञ्च।

(६) सौम्यौषसेष्विति ख० ङ० पुस्तकान्तरञ्च, चौषिसेष्विति च०।

(७) स्तुतास्ताः इति ङ० पुस्तकान्तरञ्च।

(८) भ्रन्ते देवतां सूक्तभागिनोमिति पुस्तकान्तरम्, सूक्तभाजा इति ग०, सूक्तभागिगामिति ङ०।

(क) ऋ० १, ४, १।

एते काव्यात्यचौ यौष्यौ ग्रावाणि सेति पञ्च च[1] ॥९४॥
ग्रेषा वज्रभ्यो यूपेभ्यो[2] वैश्वदेवी मृगस्तमौ[3]।
अंशा[क]नद्या प्रश्निनी योक्ता[4] पञ्चमैन्द्राग्न[5]मुच्यते ॥९५॥
वैश्वदेव्यग्निमुषसं[6] दधिक्रावृणेति[7] चैतया।
आग्नेन्द्री तव इन्द्रेति परा[8] वैश्वानरस्तुचः ॥९६॥
प्रयन्तु मारुता[9]स्वाग्न्या ग्रतधारक्रुत्स्तवः।
प्र वो वाजा चतुर्[10] स्तौति चर्त्विजः स्तौति[11]मन्वतः॥९७॥
पुरीष्यास[12] [ख]इति तस्माग्निष्ण्यानग्नीन् प्रशंसति।

---

(१) एते काव्यात्यचौ चोभौ यौष्यौ ग्रावाणि पञ्च चेति ख०।
(२) ग्रेषेभ्यो वज्रयूपेभ्य इति ग०।
(३) वैश्वदेवी मृगस्तमीति क०, वैश्वदेवोमृगस्तमीति पुस्तकान्तरम्।
(४) स्वान्ता प्रश्नवना योक्तेति च०।
(५) स्वान्ताः प्रश्नवनाः योक्तैन्द्राग्नी ऐन्द्राग्नमिति ङ० पुस्तकान्तरञ्च।
(६) अग्निमुषसं वैश्वदेवीति क० ख० ग० घ० च०।
(७) दधिक्रामितीति क० ग० घ० च०।
(८) अग्नेन्द्री तव इन्द्रचक्र् परेति ङ० पुस्तकान्तरञ्च।
(९) प्रयन्तमारुतः इति ख० ङ० पुस्तकान्तरञ्च।
(१०) ऋतुनितिपाठः समीचीनः।
(११) स्तौति ऋत्विजश्चैवेति ख० ङ० पुस्तकान्तरञ्च।
(१२) पुरीष्यास इति ग०।

---

(क) ऋ० १, १९१, ७। (ख) ऋ० ३, २२, ४।

ज्ञेया[१]श्चैव तु होतारस्ते दैव्याश्चैव तत्र तु[२] ॥९८॥
त्रयोविंशतिरैन्द्राग्नी इच्छन्तीति पराण्यतः।
सूक्ते प्रेति तु नद्यश्च विश्वामित्रं समूदिरे[३] ॥९९॥
[४]पुरोहितः सन्निज्यार्थं सुदासः सोऽहरद्धनम्।
विपाट्छुतुद्र्योः सम्भेदं शमित्येते उवाच ह ॥१००॥
प्रवादास्तत्र दृश्यन्ते द्विवद्बहुवदेकवत्।
अच्छेत्यर्द्धर्चे पञ्चो वा नदीष्वप्येकवन्ति ते ॥१०१॥
आद्ये तृचे द्विवत्सार्द्धं विश्वामित्रवचःश्रुतेः।
एनाभिर्वृग्भिर्वा नद्य ऋषिं बहुवदूचिरे ॥१०२॥
षष्ठ्यष्टम्यो[५]श्चतुर्थ्याश्च दशम्याश्चेतरा ऋषेः।
सप्तम्यामृचि षष्ठ्याश्च यौ देवौ[६] परिकीर्तितौ ॥१०३॥
निपातिनौ तु तौ ज्ञेयौ त्वैन्द्रापार्वत्यृगुत्तमे[७]।
करोति पुत्रिकां नारी[८] यथा दुहितरन्तथा ॥१०४॥

---

(१) यूपा इति ख०।

(२) तत्र हेति ख० ङ०।

(३) विश्वामित्रः समूहिरे इति ख० ग० पुस्तकान्तरञ्च, स संवदन्निति क० घ० च०।

(४) पुरोहित इत्यादि श्लोकत्रयं क० घ० ङ० चिह्नितपुस्तकेषु नोपलभ्यते।

(५) सप्तम्योरिति पाठः साधुः।

(६) यौदकौ इति ग०।

(७) पार्वत्यर्गुत्तमेति ङ० पुस्तकान्तरञ्च।

(८) नामेति ख० ङ० पुस्तकान्तरञ्च।

तस्यां सिञ्चति रेतो वा[१] तच्छामदिति कीर्तितम्।
रिक्थस्य दुहितुर्दानं नेत्यृषि प्रतिषिध्यते[२] ॥१०५॥
तस्याश्चैव[३] यवीयांसं भ्रातरं ज्येष्ठवत्सुतं।
सुदासश्च महायज्ञे दक्षिणा गाधिसूनवे[४] ॥१०६॥
निगृह्णीतं बलाच्चेतः[५] सोऽवसीदद्विचेतनः।
तस्मै [६]ब्राह्मीन्तु सौरीं वा नाम्ना वाचं ससर्परीं ॥१०७॥
सूर्य्यवेश्मादिहागत्य ददुस्ते[७] जमदग्नयः।
कुशिकानां ततः सा वागमतिन्तामपाहनत् ॥१०८॥
उपेत्य चाख्यां[८] कुशिकान् विश्वामित्रो बुबोध यत्।
लब्ध्वा वाचं च हृष्टात्मा[९] तानृषीन् प्रत्यपूजयत्[१०] ॥१०९॥
ससर्परीरिति द्वाभ्यामृग्भ्यां वाचं स्तुवन् स्वयम्।
स्थिरावित्यनसो[क]ऽक्त्वान्यनडुह[११]श्च गृह्णन् व्रजन् ॥११०॥

(१) रेतो धा इति ङ० पुस्तकान्तरञ्च।
(२) प्रतिषेधतीति ख० ङ० पुस्तकान्तरञ्च।
(३) तस्याश्चाहेति ख० ङ० पुस्तकान्तरञ्च।
(४) प्राक्लिना गाधिसूनवे इति क० ग० घ० च०।
(५) गृहीत्वा बलात्तेतः इति ख० ङ० पुस्तकान्तरञ्च।
(६) तस्येति क० घ०।
(७) तां ददुरिति ख० ङ० पुस्तकान्तरञ्च। आगत्येत्यत्र आहृत्येति क० ग० घ० च०।
(८) उपेति चास्यां कुशिकानिति क० घ०, उपेत्य वाचं कुशिकानिति ङ०।
(९) प्रतिष्ठात्मेति ख० ङ० पुस्तकान्तरञ्च।
(१०) अन्वचेतयदिति ङ० पुस्तकान्तरञ्च।
(११) इत्यनसाक्त्वान्यनडुहमिति क० घ०। अनडुहमित्यत्र अनडुहः इति ङ०।

(क) ऋ० ३, १०, १०।

[1]अनसोऽङ्गानि चोत्थाप्य अनड्वाहौ गृहात्मजौ।
ततश्च स्वशरीरञ्च गृहान् स स्वयमाप ह ॥१११॥
रथञ्च स्वशरीरेण गृहान् गच्छन् परादद।
पराश्चतस्रो याश्चत्र वसिष्ठद्वेषिणीर्विदुः[2] ॥११२॥
विश्वामित्रेण याः[3] प्रोक्ता अभिशापा इति स्मृताः।
द्विषद्वेषास्तु ताः प्रोक्ता विद्याश्चैवाभिचारिकाः[4] ॥११३॥
वसिष्ठास्ता[5]न शृण्वन्ति तदाचार्य्यकसम्मतम्।
कीर्त्तनाच्छ्रवणाद्वापि महान् दोषः प्रजायते[6] ॥११४॥
शतधा भिद्यते मूर्द्धा कीर्त्तितेन श्रुतेन वा।
तेषां बालाः प्रमीयन्ते तस्मात्तास्तु न कीर्त्तयेत् ॥११५॥
विश्वांश्च देवां[7]स्तुष्टाव चतुर्भिरिममित्यृषिः।
अस्तौद्विश्वात्मना सर्व्वान् मन्यमानः परं पदम् ॥११६॥

---

(१) अनस इत्यादिसार्द्धश्लोकः क० ग० घ० चिह्नितपुस्तकेषु नेष्यते। तेषु अस्मिन् स्थले, तन्वञ्च स्वां शरीरञ्च गृहानाच्छन् परीददे इति पाठोऽस्ति।
(२) वसिष्ठद्वेषिण्यः स्मृताः इति क० ख० ग० घ०।
(३) त्विति क० ख० ग० घ० च०।
(४) विद्वेषिण्यः स्मृता विद्यादभिचारेषु शस्यते। इति क० ग० घ० च०।
(५) त्विति ख० पुस्तकान्तरञ्च, ते इति ङ०।
(६) श्लोकार्द्धमेतत् क० घ० चिह्नितपुस्तकयोर्न दृश्यते।
(७) विश्वान् देवांश्चेति ङ० पुस्तकान्तरञ्च।

[१]देवानामसुरत्वं तदेकं महदितीरयन्।
अश्विनौ मित्र ऋभवो[२] धेनुर्मित्र इहेह वः ॥११७॥
[३]वैश्वदेवीति विज्ञेया मैत्री मित्राय पञ्च तु।
ऐन्द्रार्भवस्तृचस्त्वार्भवे सूक्तः स उत्तमः[४] ॥११८॥
[५]पूर्व्वे द्वृचे निपातीन्द्र उषो वाजेन पञ्चमात्।
उषस्यादुत्तरे षड्भिः स्तुता ऋग्देवता दृचे:[६] ॥११९॥
ऐन्द्रावरुणः प्रथमो वार्हस्पत्यस्ततः परः[७]।
पौष्णसावित्रसौम्यास्तु मैत्रावरुण उत्तमः[८] ॥१२०॥
तुष्टाव जमदग्निश्च[९] तेन देवा वृता वृधौ।
देवर्षिपितृपूजार्थं य अन्नाण्णपचक्षुनः[१०] ॥१२१॥

---

(१) अस्तौदिन्द्रात्मना सर्व्वानित्यादि महदितीरयन्नित्यन्तपाठः क० ग० घ० चिह्नितपुस्तकेषु नोपलभ्यते।

(२) ऋतवः इति क० घ० च०।

(३) वैश्वदेवीति श्लोकार्द्धं ख० ङ० चिह्नितपुस्तकयोर्न विद्यते।

(४) उत्तमे इति ख० ङ० पुस्तकान्तरञ्च।

(५) पूर्व्वे द्वृचे इति श्लोकार्द्धं क० ख० घ० चिह्नितपुस्तकेषु नेष्यते।

(६) सौषसादुत्तरास्त्वन्ये षट् पृथग्देवतास्तृचाः इति क० ख० ग० घ० च०।

(७) तथापरः इति ग०। तदुत्तरः इति ङ०।

(८) सत्रामन्त्यस्तु यस्तृचः इति ङ० पुस्तकान्तरञ्च।

(९) जमदग्निस्तु इति ख० ङ० पुस्तकान्तरञ्च।

(१०) यथाचान्नाद्धियक्षुन इति क० ग० घ० च०।

यस्य वै श्येनरूपेण आहर[१]द्रुचवा मधु ।
सोऽग्निन्तु पञ्चदशभिरिन्द्रं षोड़शभिः परैः ॥१२२॥
ऋषिस्त्वामिति तुष्टाव सूक्तैरेतैस्तु[२] गौतमः ।
स भ्रातरमिति त्वासु[३] तिसृष्वग्निर्निपातभाक् ॥१२३॥
वरुणेनाभिसंस्तौति प्राङ्[४]रन्ये निपातितम् ।
लिङ्गोक्तदेवते सूक्ते एके[५] प्रत्यग्निरेव तु[६] ॥१२४॥
ऋषिर्बोधदिति द्वाभ्यां स्तौति सोमकमेव तु[७] ।
तस्यैव वायुरर्थाय[८] पराभ्यामश्विनौ स्तुतौ ॥१२५॥
अहमातुजनिष्येऽहं[९] ब्रुवाणं गर्भ एव[१०] तम्[११] ।
अन्वगात्त्वदितिः[१२] पुत्रमिन्द्रमात्मस्थितैषिणी ॥१२६॥

---

(१) यस्य च श्येनरूपेण चाहरदिति ख० ङ० पुस्तकान्तरञ्च ।
(२) एति त्विति ग० घ०, एति चेति ङ० पुस्तकान्तरञ्च ।
(३) त्वाश्विति ङ० ।
(४) अभिसंस्तौत्या प्राङ्गरिति क० ग० घ० च० ।
(५) लिङ्गोक्तदैवतं सूक्तमेते इति क० घ० ।
(६) लिङ्गोक्तैर्देवते सूक्ते एके प्रत्यग्निरित्युभे, इति ङ० ।
(७) सोमकभूपतिमिति ङ० पुस्तकान्तरञ्च ।
(८) वायुषोऽर्थायेति ख० ङ० पुस्तकान्तरञ्च ।
(९) जनिष्यामेति क० ख० च०, जनिष्यामा इति ग० ।
(१०) गर्भमेवेति क० ग० घ० च० ।
(११) त्विति क० ख० ग० घ० च० ।
(१२) अन्वगाददितिरिति ङ० पुस्तकान्तरञ्च ।

स जातमात्रो युद्धाय ऋषिमेवाजुहाव तं[१]।
योधयन्[२]वामदेवस्तं कृत्वात्मनि बलं तथा ॥१२७॥
दिनानि दश रात्रीश्च[३] विजिग्ये चैनमोजसा।
स तङ्क इम[४]मित्यस्यां विक्रीणन्नृषिसंसदि ॥१२८॥
स्वयमेवाभितुष्टाव[५] नकि[क]रिन्द्रेति[६] गौतमः।
किमादुतासीति चास्यां[७] मन्युं मध्ये[८] पराणुदत् ॥१२९॥
अथास्य रूपवीर्याणि धैर्यकार्याणि तान्यृषिः[९]।
विविधानि च कर्माणि प्रशंसादितये तथा ॥१३०॥

---

(१) स जातमात्रं युद्धायेति क० ख० ग० घ० च०।
(२) योधयेदिति क० ख० घ० च०।
(३) रात्र्येति क० ग० घ० च०।
(४) सतङ्ग इत्यमिति ग०।
(५) स्वयं तेनाभितुष्टावेति ग०, स्वयमेवाभितुष्टावेति ङ० पुस्तकान्तरञ्च।
(६) इन्द्रयेति ङ०।
(७) किमादुतासीदित्यस्यामिति ङ० पुस्तकान्तरञ्च।
(८) मन्युमर्धे इति क० ग० घ० च०, मन्युमध्ये इति ख०।
(९) धैर्याथान्यामि चारिष्विति क०, धैर्यायन्यामि चारिष्विति घ० च०, तान्यृषिरिति ङ०।

---

(क) ऋ० १, २७, ८।

अयमित्यथ वै सूक्ते[१] तृचे स्तुतिर्ऋतस्य हि[२]।
प्रसुषविभ्यो नवभिर्ऋग्भिः श्येनस्य[क] संस्तवः ॥१२१॥
पराभिस्त्वेति पञ्चर्चे सोमेनेन्द्रः स्तुतः[३] सह।
सोमप्रधाना[४]मेतान्तु क्रोष्टुकि[५]र्मन्यते स्तुतिं ॥१२२॥
दिवश्चिदिति चानेन तृचेनेन्द्रेण संस्तुतः[६]।
उषसं मध्यमां मेने त्वाचार्य्यः[७] शाकटायनः ॥१२३॥
वाममित्यृक्स्तुतास्त्वत्र[८] भगः पूषेति चार्य्यमा।
कल्हलती[ख]ति पूषोक्तोऽदन्तकः स इति श्रुतेः ॥१२४॥
अस्माकमुत्तमं सूर्य्यं स्तौतीत्याहाश्वलायनः[९]।

(१) अहमित्यात्मसंस्तवः इति ख० ङ०, अहमित्यात्वसंस्तावः इति ग०।

(२) तृचे स्तुतिविसस्य स्तौति ख०, तृचे स्तुतिरिवास्य स्तौति ङ० पुस्तकान्तरञ्च।

(३) पराभिस्त्वेव पञ्चर्चे सोमेन्द्रः संस्तुतः इति क० घ०, सोमेन्द्रौ च स्तुतः इति ग०।

(४) सोमप्रधानमिति क० ख० ग० घ० च०।

(५) क्रोष्टुकः इति क० घ० च०।

(६) चैतेन ते तृचे नेन्द्रसंस्तुतेति क० घ० च०, इन्द्रसंस्तुतामिति ग०।

(७) मेन आचार्य्यः इति ख० ङ० पुस्तकान्तरञ्च।

(८) वाममित्यृचि संस्तुतेति ख० ङ० पुस्तकान्तरञ्च।

(९) कल्हलतीत्यादि स्तौतीत्याहाश्वलायनः इत्यन्तपाठः क० ग० घ० च० चिह्नितपुस्तकेषु न दृश्यते।

(क) ऋ० १, ११८, ११। (ख) ऋ० ४, १२, २३।

इन्द्रस्य हरयो ह्यश्वा अग्नेरश्वास्तु[१] रोहितः ॥१२५॥
सूर्यस्य हरितश्चैव[२] वायोर्नियुत एव च ।
रासभा रोहितो[३]ऽश्विभ्यामजाः[४]पूष्णश्च[५]वाजिनः ॥१२६॥
पृषतो[६]ऽश्वास्तु मरुतां गावोऽरुण्यस्तथोषसः[७] ।
सवितुर्वाजिनः श्यावा[८] विश्वरूपा बृहस्पतेः ॥१२७॥
सहैते देवताभिस्तु[९] स्तूयन्ते स्वल्पशो[१०]ऽन्यथा ।
आयुधं वाहनं चापि स्तुतौ यस्येह दृश्यते ॥१२८॥
तमेव तु स्तुतं विद्यात्तस्यात्मा बहुधा हि सः ।
कनीनका[क]सूक्तशेषो हर्य्योः स्तुति[११]रिहोच्यते ।
चत्वार्य्यंतस्य विज्ञेयान्यप्रशस्यानि[१२] विद्रधेः[ख] ॥१२९॥

इति बृहद्देवतायां चतुर्थोऽध्यायः ।

---

(१) अश्वास्त्विति क० ख० घ० ङ० च० ।
(२) प्रोक्ता इति ख० ङ० पुस्तकान्तरञ्च ।
(३) रासभो मोहितः इति ख०ङ०पुस्तकान्तरञ्च, रासभौ सहितः इति ग० ।
(४) माजाः इति क० घ० च० ।
(५) पूष्णास्त्विति ख० ङ० पुस्तकान्तरञ्च ।
(६) पृषत्यः इति ङ० पुस्तकान्तरञ्च ।
(७) तथोषसामिति ख० ङ० पुस्तकान्तरञ्च ।
(८) श्यामा इति क० घ० च० ।
(९) चेति ख० ङ० पुस्तकान्तरञ्च ।
(१०) स्तूयन्तेऽप्यतेऽन्यथेति क० घ० च०, स्तूयन्तेऽप्यल्पशोऽन्यथेति ग० ।
(११) धर्धसन्ततिरिति क० घ० च०, सूक्तांशो ऽध्यर्धसन्ततिरिति ग० ।
(१२) चत्वारि परमामेयान्याप्रशस्यानीति ख० ङ० पुस्तकान्तरञ्च ।

---

(क) ऋ० १, ७, २ । (ख) ऋ० ४, ३२, २३ ।

## अथ पञ्चमोऽध्यायः ।



प्रेति पञ्चार्भवं चौणि[१] दधिक्राणि पराण्यतः ।
ऋग्द्यावापृथिव्यौ स्तौति दधिक्रावृणां[क]मुखे तु या[२] ॥१॥
परोचेरमुतो वाग्भिर्नामभिस्तु स्तुतास्त्रयः ।
अग्निर्वायुश्च सूर्यश्च हंसः शुचिषदित्यृचा[३] ॥२॥
नियुक्ता सूर्य्यदेवत्या हंस इत्यैतरेयके[४] ।
द्वे त्वैन्द्रावरुणे सूक्ते[५] तच[६] चीण्याश्विनाग्निकः[७] ।
अग्रं वायो विह्वी[ग] त्वेषु [८]वायव्याः सप्त कीर्त्तिताः ॥३॥

---

(१) पञ्चार्भवाणीति ङ० ।
(२) दधिक्रावृनां स्तुतौ हि वामिति ख०, दधिक्राया मुखे तु येति ग०, दधिक्रायामुतो (ख) हि वामिति ङ० ।
(३) इत्यृचीति क० ग० घ० च० ।
(४) श्लोकार्द्धमेतत् क० ग० घ० च० चिह्नितपुस्तकेषु न विद्यते ।
(५) द्वे इन्द्रावरुणे इन्द्रादिति ङ० ।
(६) ततः इति ग० ङ० पुस्तकान्तरञ्च ।
(७) आश्विनाग्निकः इति क० ख० ग० घ० च० ।
(८) विह्वी मां त्या इति ङ० पुस्तकान्तरञ्च ।

---

(क) ऋ० ४, ३९, २ । (ख) ऋ० १, २२, १५ ।
(ग) ऋ० ४, ४८, १ ।

वायुः शुनः सूर्य एवात्र[१] सीरः[२]
शुनासीरौ[क] वायुसूर्य्यौ[३] वदन्ति।
शुनासीरं यास्क इन्द्रन्तु मेने
सूर्य्येन्द्रौ तौ मन्यते शाकपूणिः ॥७॥
शुनासीरौ पञ्चम्यां तु स्तुतौ तौ
सीतायै षष्ठी त्वथ सप्तमी च[४]।
शुनं नः फालाः[ख] कृषिं स्तौति पादः[५]
शुनं कीनाशाः[ग] कृषिजीवान् मनुष्यान्[६] ॥८॥
शुनं पादे पर्जन्यं तृतीये[७]
चौनृषिः कृषिकामो[८]ऽजगाद।

(१) एवात्रेत्यत्र त्वेवेति ख॰ ङ॰ पुस्तकान्तरञ्च।
(२) सौर्य्यं इति क॰ घ॰ च॰।
(३) वायुसूर्य्यमिति क॰ घ॰ च॰।
(४) द्वे तु सीतायै षष्ठी सप्तमी चेति क॰ ग॰ घ॰ च॰।
(५) पादे इति ङ॰।
(६) कृषिजीमनुष्यानिति क॰ घ॰ च॰।
(७) स्तुतः पादेऽत्र पर्ज्जन्यस्तृतीये इति क॰ ग॰ घ॰ च॰।
(८) अन्त्याम् त्वृषिर्धर्म्मकामः इति क॰ घ॰ च॰, अन्त्यत्वृषिर्धनकाम इति ग॰।

(क) ऋ॰ ४, ५७, ५। (ख) ऋ॰ ४, ५७, ८। (ग) ऋ॰ ४, ५७, ८।

ऋषिं वा[१] स्तौति सर्व्वं हि सूक्तं
समुद्रादित्यग्नेर्मध्यमस्य ॥९॥
आदित्यं वा ब्राह्मणोक्तं प्रदिष्टं
आग्नेयं[२] यदाज्यसूक्तं[३] हि दृष्टं[४] ।
अपां स्तुतिं वा यदि वा घृतस्तुतिं
गवां स्तुतिं वा सूक्त[५]मेतदद्न्ति ॥१०॥
स्वर्भानुदृष्टं सूर्यस्य अपघ्नत्य[६]तमोऽत्रयः ।
सप्तविंशतिभिः सूक्तैरबोधीत्यग्निमस्तुवन् ॥११॥
त्रैवृष्ण[क]स्त्रसदस्युश्च[ख] अश्वमेध इति त्रयः ।
स्तूयमानाः परोक्ष्याः स्युरचिक्येते[७]क्वचित् क्वचित्[८]॥१२॥
ऐक्ष्वाक[९] स्त्र्यरुणो राजा त्रैवृष्णो रथमास्थितः ।

---

(१) ऋषिवदिति क० घ० च० ।
(२) आग्नेयमिति ख० ङ० पुस्तकान्तरञ्च ।
(३) वाप्याज्यसूक्तमिति क० घ० च०, वा प्राज्यसूक्तमिति ग० ।
(४) प्रदिष्टमिति ख० ङ० पुस्तकान्तरञ्च ।
(५) गव्यमेके सौर्य्यमिति क० ग० घ० च० ।
(६) स्वर्भानुदिष्टसूर्य्यस्यापघ्नन् ये इति ख० ङ० पुस्तकान्तरञ्च ।
(७) अचिक्येते इति घ० ।
(८) त्रैवृष्णस्त्रसदस्युश्चेति श्लोकः ख० ङ० चिह्नितपुस्तकयोर्न विद्यते ।
(९) ऐक्ष्वाकुरिति क० ग० घ० च० ।

---

(क) ऋ० ५, २७, १ । (ख) ऋ० ४, ३८, १ ।

सञ्जयाद्राम्यरक्षीश्च(१) वृशो जानः(२) पुरोहितः ॥१३॥
स ब्राह्मणकुमारस्य रथो गच्छञ्छिरोऽच्छिनत्।
एनःस्थित्यब्रवीच्चैव स राजेनं(३) पुरोहितं ॥१४॥
सोऽथर्वाङ्गिरसान्मन्त्रान्(४) दृष्ट्वा सञ्जीव्य तं शिशुं(५)।
क्रोधात्मनयच्य राजानमन्यं देशं समाश्रितः ॥१५॥
हरोऽप्याग्नेर्नेनाशाच(६) तस्यापक्रमणाद्वृषेः(७)।
अग्नौ प्रास्तानि हव्यानि(८) न ह्यपच्यत(९) कानिचित् ॥१६॥
ततः प्रव्यथितो राजा अभिगम्य प्रसाद्य च(१०)।
आनीला सवृशं जानं(११) पुनरेव पुरोदधे ॥१७॥
स प्रसन्नो वृशोऽन्वैच्छद्धरमग्नेर्नृपक्षये।

---

(१) अस्य रश्मीश्चेति क० घ० च०।

(२) वृशोजानः इति ख०।

(३) राजा तमिति ख० ङ० पुस्तकान्तरञ्च।

(४) सोऽथ वार्शानि सामानीति क० घ० च०, सोऽथर्वा गिरिशान् मन्त्रानिति ख०।

(५) सुतमिति ङ०।

(६) अस्येति ख० ग० ङ० पुस्तकान्तरञ्च।

(७) तस्याप्रक्रमणाद्वृषेरिति क० ग० घ० च०, गुरोरिति ङ० पुस्तकान्तरञ्च।

(८) प्राप्तानि पच्यानीति क० घ० च०, प्रास्तानि प्रक्यानीति ख०, प्रास्तानि चाज्यानीति ङ०।

(९) ह्यपच्यन्तेति पाठः साधुः। न ह्यपचतेति क० घ० च०, यवहन्ते इति ख०, न जीर्यन्ते चेति ङ०।

(१०) तमिति ग० ङ० पुस्तकान्तरञ्च।

(११) आनीय सवृशं यानं इत्येव पाठो भवितुमर्हति।

अविन्दत पिशाचीं च[१] भार्यां तस्य च भूपतेः ॥१८॥
निषषः स तया सार्द्धं मासं द्यां कशिपावपि[२] ।
तामुपामन्त्रयाञ्चक्रे कमेतं त्वमिति नृपा[३] ॥१९॥
हरः[४] कुमाररूपेण नृशस्ता[५]मभ्यभाषत ।
विज्योतिषेति चोक्तायां सहसाग्निरदज्वलत् ॥२०॥
[६]पिशाचीमदहत्तां स यत्र चोपविवेश सा ।
एष एव परामृष्टो भाल्लवी ब्राह्मणो[७]श्रुचः ॥२१॥
निदानसंज्ञके ग्रन्थे छन्दोगानामिति श्रुतिः[८] ।
भवेदेव परामर्शः सूक्तस्यास्य व्यपेक्षया[९] ॥२२॥
भवन्ति बाह्या मन्त्रा[१०] हि विधिशब्देन[११] चोदिताः ।

---

(१) तामिति ग० ङ० पुस्तकान्तरञ्च ।
(२) कपिशावमीति क० घ० च० ।
(३) नुवेत्नृषेति ङ० ।
(४) नरः इति क० घ० च० ।
(५) श्रुवंस्तामिति ख० ।
(६) ख० ङ० चिह्नितपुस्तकयोः पुस्तकान्तरे च, पिशाचीमदहत्तां स इति श्लोकात् प्राक्, सहमानः समायान्तं प्रकाशश्च प्रकाशयन्निक-धिकं श्लोकार्द्धं पठितम् ।
(७) भाल्लाभिशाख्ययाः इति ख०, भाल्लविशाख्ययाः इति ङ० ।
(८) एतच्छ्लोकार्द्धं क० ग० घ० च० चिह्नितपुस्तकेषु न दृश्यते ।
(९) विवक्षयेति ख० ङ० पुस्तकान्तरञ्च ।
(१०) वाक्यान्येषामिति क० ग० घ० च० ।
(११) विधिदृष्टेनेति क० ग० घ० च० ।

दृश्यन्ते ब्राह्मणे मन्त्रा एकदेशे प्रदर्शिताः ॥२३॥
जामदग्न्यो यथाप्रियः[1] स्तौतीया[2]श्चैतरेयके।
आप्रियः सुसमिद्धाय[3] पञ्चमं सूक्तमत्र तु[4] ॥२४॥
एतद्[5]वैश्वदेवी वा अन्त्या चैन्द्राग्न्युपोत्तमे।
ऐन्द्राणि द्वादश त्रीणीत्युशना[6]यत्र[7] संस्तुतः ॥२५॥
उशनेति तु पादेन संहृयद्दामनेन च[8]।
इन्द्राकुत्सेति चैतस्यां कुत्सेनेन्द्रः स्तुतः सह ॥२६॥
यत्वा सूर्य्येति चान्त्यौणां पञ्चर्चे[9] कर्म्म कीर्त्यते।
[10]त्रैवृष्णस्त्र्यरुणो राजा अश्वमेध ऋणं च यः ॥२७॥
स्तूयमानाः प्रतीच्याः सुरचिश्चैते क्वचित् क्वचित्।
अनस्वन्तेति सूक्तेऽस्मिन्नाग्नेयेऽत्रिर्ऋषिः स्वयम् ॥२८॥
दानतुष्टः प्रशंसैतान्राजर्षीनिति केचन।

---

(१) जामदग्नास्तथैवाज्यः इति क॰ घ॰ च॰, यथाप्रीय इति ग॰।

(२) स्तोकीयाः इति ख॰ ग॰ ङ॰ पुस्तकान्तरञ्च।

(३) आप्रः सुसमिद्धायेति क॰ ग॰ घ॰ च॰।

(४) अग्निरित्विति ख॰ ङ॰ पुस्तकान्तरञ्च।

(५) एदग्मगिति क॰ ग॰ घ॰ च॰, रोदग्मगिति ख॰।

(६) द्वादशान्यादीन्युशना इति ङ॰ पुस्तकान्तरञ्च।

(७) त्वन्नेति क॰ ख॰ ग॰ घ॰ च॰।

(८) उशनेति च पादोऽयं संहृयद्दां परश्च यः इति ख॰, परश्च यः इत्यत्र परश्चय इति ङ॰ पुस्तकान्तरञ्च।

(९) पञ्चर्चः इति क॰ घ॰ च॰।

(१०) त्रैवृष्णस्त्र्यरुणो राजेत्यादि सार्द्धश्लोकः क॰ ग॰ घ॰ च॰ चिह्नित-पुस्तकेषु न विद्यते।

आभीरध्येयणाश्चेभ्यो अग्निं प्रति च दृश्यते ॥२९॥
अयुतञ्च गवां त्रीणि शतान्यथ च विंशतिः ।
सौवर्णशकटं गोभ्यां असणोऽदान्नृपोऽत्रये ॥३०॥
अश्वमेधशतं चोद्दांस्तस्यद्स्युर्धनं बहु ।
राज्ञः प्रति च तत्सूक्तं बभाष इति केचन ॥३१॥
आत्मा हितात्मने[१] दद्यादपश्चौनृपतेर्ऋषिः ।
अत्रेः सुतस्तृषिं बभ्रुमार्त्विज्याय वृणञ्च यः ॥३२॥
सहस्रदक्षिणे सोमे वव्रे तं सोऽप्ययाजयत् ।
ददौ तदौशनो राजा सहस्राणि शतानि च ॥३३॥
तस्मै चत्वारि चत्वारि महावीरञ्च काञ्चनम् ।
प्रवर्ग्येषु महावीराः सौवर्णास्तस्य चाभवन् ॥३४॥
प्रतिगृह्य ऋषिर्गच्छन् मध्यमेनाग्निना पथि ।
पृष्ट इन्द्रेण चाचख्यौ भद्रं चतसृभिश्च तत् ॥३५॥
कोनुवान् वैश्वदेवानि एकादश[२] पराण्यतः[३] ।
मारुतानि दश प्रेति इत्वाभीत्यृचि तु स्तुता[४] ॥३६॥
द्वितीययान्यया स्तुतः सविता शौनकोऽब्रवीत्[५] ।
उपेति वार्हस्पत्यस्तृचो यो मारुत्युत्तरा ॥३७॥

---

(१) आत्महितात्मने इति पाठः सङ्गतः ।

(२) कोनुवांश्च वैश्वदेवान्येकादशेति क० ।

(३) त्रिंति ङ० पुस्तकान्तरञ्च ।

(४) प्रेवीत्वाभीत्यृचि तु संस्तुतेति ग०, इत्वाभि न ऋचा स्तुतेति ख० ङ० पुस्तकान्तरञ्च ।

(५) श्लोकार्द्धमेतत् क० ग० घ० च० चिह्नितपुस्तकेषु न दृश्यते ।

तमुष्टुही तु रौद्री स्यात्[१] प्रमुष्टुतिरिति तृचि।
बृहस्पतिः शाकपूणिः पर्जन्याग्नी तु गालवः ॥३८॥
यास्कस्तु पूषणं मेने स्तुतमिन्द्रन्तु शौनकः।
वैश्वानरं भागुरिस्तु माहत्यौषसमाश्विनं[२] ॥३९॥
वायव्याध्वर्यवः सौमी दध्रेत्यैन्द्री परा तु या[३]।
[४]अग्निं धर्मं पराघ्नन्ति[५] अश्विनौ स्तौत्यृगच्छ च ॥४०॥
प्रेति वां पूषणं या चेत्यर्द्धर्चेऽग्निरिहोच्यते।
प्रथमेऽथ द्वितीये च स्तुता एति दिवौकसः ॥४१॥
आवाचं मध्यमां स्तौति ततोऽन्या तु बृहस्पतिं।
[६]ज्याया समिति चादित्यं प्र वो वायुरिहोच्यते ॥४२॥
तं प्रत्नथे[क]ति सौमी वा दैव्यैन्द्री वा प्रजापतेः।
परोक्षवैश्वदेवं तदाह कौषीतकिः स्वयम् ॥४३॥
तेषु तृतीयमित्युक्तं देवान् ऊव[ख] इदं परम्।

---

(१) त्विति क० ग० घ० च०।

(२) आश्विनीति क० ग० घ० च०।

(३) दघ्रेत्यैन्द्र्यग्रंसावितीति ङ० पुस्तकान्तरञ्च।

(४) अग्निं धर्ममित्यादिसार्द्धश्लोकः क० ग० घ० च० चिह्नितपुस्तकेषु न पठितः।

(५) पराततन्नीति पुस्तकान्तरम्।

(६) ज्यया समिति आदित्यमित्यादि देवान् ऊव इदं परमित्यन्तपाठः क० ग० घ० च० चिह्नितपुस्तकेषु नेष्यते।

---

(क) ऋ० १, ६६, १। (ख) ऋ० १, १०, ७।

देवानां पत्नीरिति तु [१] देवपत्न्यो ह्यृचे स्तुताः ॥ ४४ ॥

अयं चतुर्णामिति चेन्द्रवायू
त्रिभिः स्तुतौ वायवृक्ष्वे[क]ति वायुम् ।
रथं ह्यृचा रोदसी स्वयतेऽत्र
यस्याः स्तुता मरुतो रुद्रपत्न्याः[२] ॥ ४५ ॥

आरुद्रा स इति त्वस्यां रुद्राणां संस्तुतो गणः ।
मरुतान्तु गणस्यैते नाम्ना[३] रुद्रा इति स्तुताः[४] ॥ ४६ ॥
असावग्निरिमौ[५] चोभौ त्वग्नी[६] पार्थिवमध्यमौ[७] ।
यदुत्तमे त्वृचेऽर्द्धर्चे इले[ख]ऽग्निं संस्तुतौ ह्यृचे ॥ ४७ ॥
मध्यमा वाक् स्त्रियः सर्व्वाः पुमान् मार्द्धश्च मध्यमः ।
गणाश्च सर्व्वे मरुतो गुणभेदात् पृथक् पृथक्[८] ॥ ४८ ॥

---

(१) चेति ख० ङ० पुस्तकान्तरञ्च ।
(२) क० घ० च० चिह्नितपुस्तकेषु, अयं चतुर्णामितीति श्लोकस्थले, अयं चतुर्णामिति च इन्द्रवायुस्त्रिभिः स्तुतौ । वायुर्द्वितीयपान्त्येऽक्षा रथान्विति तु रोदसी ॥ इति पाठो वर्त्तते ।
(३) गणस्यैतन्नामेति क० ग० घ० च० ।
(४) स्तुताः इति क० ग० घ० च० ।
(५) अयमिति ङ० पुस्तकान्तरञ्च ।
(६) चोभावग्नी इति ङ० पुस्तकान्तरञ्च ।
(७) पार्थिवमध्यगाविति ख० ।
(८) क० ग० घ० च० चिह्नितपुस्तकेषु, यदुत्तमे त्वृचेऽर्द्धर्चे इत्यादिसार्द्ध-श्लोकस्थले अग्ने मरुद्भिरित्यस्यां मरुद्भिः सह संस्तुताविति श्लोकार्द्धं वर्त्तते ।

---

(क) ऋ० ७, ९०, ४ । (ख) ऋ० १, १८८, ८ ।

राजर्षिरभवद्दार्भ्यो रथवीति[क]रिति श्रुतः[१] ।
स यक्ष्यमाणो राजर्षिरभिगम्य प्रसाद्य च ॥४९॥
आत्मानं कार्य्यमर्थं[२]च ख्यापयन् प्राञ्जलिः स्थितः ।
अवृणीतर्षिमात्रेयमार्त्विज्यायार्चनानसम्[ख] ॥५०॥
स सपुत्रोऽभ्यगच्छत्तं राजानं यज्ञसिद्धये ।
श्यावाश्व[ग]श्चात्रिपुत्रस्य पुत्रः खल्वर्चनानसः ॥५१॥
साङ्गोपाङ्गान् सर्व्ववेदान् यः पित्राध्यापितो मुदा ।
अर्चनानाः सपुत्रोऽथ गत्वा नृपमयाजयत्[३] ।
यज्ञे च विततेऽपश्यद्राजपुत्रीं यशस्विनीम् ॥५२॥
स्नुषा मे राजपुत्री स्यादिति तस्य मनोऽभवत् ।
श्यावाश्वस्य च तस्यां वै सक्तमासीत्तदा मनः[४] ॥५३॥
संयुज्यस्व मया राजन्निति याज्यञ्च सोऽब्रवीत् ।
श्यावाश्वाय सुतां दित्सुर्महिषीं स्वां नृपोऽब्रवीत् ॥५४॥
किं ते पुत्रीमहं कन्यां श्यावाश्वाय ददामि हि ।
अत्रिपुत्रो दुर्बलो हि जामाता त्वावयोरिति ॥५५॥
राजानमब्रवीत् सापि नृपर्षिकुलजा ह्यहम् ।

(१) श्रुतिरिति ङ० पुस्तकान्तरञ्च ।

(२) कार्य्यवन्तमिति ङ० पुस्तकान्तरञ्च ।

(३) श्यावाश्वश्चात्रिपुत्रस्येति सार्द्धैकश्लोकः क० घ० च० चिह्नितपुस्तकेषु नोपलभ्यते ।

(४) एतच्छ्लोकार्द्धं क० घ० च० चिह्नितपुस्तकेषु न दृश्यते ।

(क) ऋ० ५, ६१, १९ । (ख) ऋ० ५, ६४, ७ । (ग) ऋ० ५, ६१, ५ ।

नानृषिर्नो हि जामाता नैष मन्त्रान् हि दृष्टवान् ॥५६॥
ऋषये दीयतां कन्या वेदस्यां वा भवेत्तथा ।
ऋषिं मन्त्रदृशं वेदपितरं मन्यते यतः[१] ॥५७॥
प्रत्याचष्टे स[२] तं राजा सह सम्मन्त्र्य भार्य्यया ।
अनृषिर्नो न[३] जामाता कश्चिद्भवितुमर्हति ॥५८॥
प्रत्याख्यात ऋषिस्तेन वृत्ते यज्ञे न्यवर्त्तत ।
श्यावाश्वस्य तु कन्यायां मनो नैव न्यवर्त्तत[४] ॥५९॥
ततः स्तुतौ[५] निवर्त्याशु तावेतावभिजग्मतुः[६] ।
ग्रशीयसौ[क][७] तरन्त[ख]ञ्च पुरुमील्ह[ग][८]ञ्च पार्थिवम्[९] ॥६०॥
तरन्तपुरुमील्हौ[१०] तु राजानौ वै ददाव्यृषी[११] ।
ताभ्यान्तौ चक्रतुः पूजामृषिभ्यां नृपतौ[१२] स्वयम् ॥६१॥

(१) श्यावाश्वाय मुनां दित्सुरित्यादिसार्द्धश्लोकत्रयं क० ग० घ० च० चिह्नितपुस्तकेषु नैच्यते ।
(२) प्रावोचत्त्वथेति ख० ङ० पुस्तकान्तरञ्च ।
(३) नैवेति ग० ।
(४) न स्म निवर्त्तते इति ख० ङ० पुस्तकान्तरञ्च ।
(५) ततस्तौ त्विति क० ग० घ० च० ।
(६) ततः स्तुतौ निवर्त्तन उभावेवाभिजग्मतुरिति ख० ङ० पुस्तकान्तरञ्च ।
(७) ग्रसीयसीति ङ० पुस्तकान्तरञ्च ।
(८) पुरुमीढमिति ङ० ।
(९) एतच्छ्लोकार्द्धं क० ग० घ० च० चिह्नितपुस्तकेषु न पठितं ।
(१०) तरन्तपुरुमीढाविति ङ० पुस्तकान्तरञ्च ।
(११) ददश्विनाविति क० घ० च० ।
(१२) तु पतिरिति क० घ० च० ।

---

(क) ऋ० ५, ६१, ६। (ख) ऋ० १, १०५, ११। (ग) ऋ० ८, ७१, १४।

ऋषिपुत्रं महिष्याश्च दर्शयामास तं[1] नृपः।
तदन्तानुमतेनैव[2] प्रादाद्बहुविधं वसु ॥६२॥
अजाविकं गवाश्वञ्च श्यावाश्वाय श्रशीयसी[3]।
अर्चिं[4] याज्यार्चितौ गत्वा पितापुत्रौ स्वमाश्रमम् ॥६३॥
अभ्यवादयतामर्चिं[5] महर्षिं दीप्ततेजसम्।
श्यावाश्वस्य मनस्यासीन्मन्त्रस्यादर्शनाद्दहम् ॥६४॥
न लब्धवानिमां कन्यां हन्त सर्वाङ्गशोभनाम्।
अप्यहं मन्त्रदर्शी स्यां भवेद्धर्षो महान् मम ॥६५॥
इत्यरण्ये चिन्तयतः प्रादुरासीन्मरुद्गणः[6]।
ददर्श संस्थितान् पार्श्वे तुल्यरूपान्महात्मनः[7] ॥६६॥
समानवयसश्चैव[8] मरुतो रुक्मवक्षसः।
तांस्तुल्यवयसो दृष्ट्वा देवान् पुरुषविग्रहान् ॥६७॥
श्यावाश्वो विस्मितोऽपृच्छत्केष्ठेति[9] मरुतस्तदा।

(१) वै इति ख० ङ०।

(२) तदन्तानुमता चैवेति क० ग० घ० च०।

(३) श्रशीयसीति ङ० पुस्तकान्तरञ्च।

(४) तौ त्विति पाठः सङ्गतः।

(५) अभ्यवादयतातत्तमिति ङ० पुस्तकान्तरञ्च।

(६) अर्चिं याज्यार्चितौ गत्वेत्यादि प्रादुरासीन्मरुद्गणः इत्यन्तपाठः क० ग० घ० च० चिह्नितपुस्तकेषु नेष्यते।

(७) तुल्यरूपानिवात्मनः इति क० ख० ग० घ० च०।

(८) चैवमिति ङ० पुस्तकान्तरञ्च।

(९) के स्थेति पाठः समीचीनः। केष्ठेतीति क०, कोष्ठेतीति ङ०।

नतस्तु मरुतो देवानृषिस्तानन्वबुध्यत[1] ॥६८॥
य ईं वहन्त इत्यृग्भिः षड्भि[2] स्तुष्टाव तांस्तथा।
अतिक्रमं हितम्तर्षिर्मेने विपुलमात्मनः ॥६९॥
यन्न[3] दृष्ट्वैव तुष्टाव यच्च[4] केष्वेति[5] पृष्टवान्।
स्तुताः स्तुत्यानया प्रीता गच्छन्तः पृश्निमातरः[क] ॥७०॥
अवमुच्य स्ववक्षोभ्यो[6] रुक्मं तस्मै तदा ददुः।
मरुत्सु तु प्रयातेषु श्यावाश्वस्तु महायशाः[7] ॥७१॥
रथवीतेर्दुहितरमगच्छन्मनसा तदा।
स मद्य ऋषिरात्मानं विवचू रथवीतये[8] ॥७२॥
एतं मे स्तोममित्यृग्भ्यां[9] दौत्ये[10] रात्रीं न्ययोजयत्।
रथवीतिं तपस्यन्तं[11] समप्रेक्ष्यार्षेण चक्षुषा ॥७३॥

---

(१) रुद्रसूनूनबुध्यतेति क० ग० घ० च०।

(२) बुद्धेति क० ग० घ० च०।

(३) यान्न इति क० घ० च०।

(४) यांश्चेति क० ग० घ० च०।

(५) केष्ठेतीति क०, केष्ठेतीति ङ०।

(६) अमुच्यत स्वकण्ठेभ्यः इति ख०, व्यामुच्यते स्वकण्ठेभ्यः इति ङ०।

(७) महातपाः इति ख० ङ० पुस्तकान्तरञ्च।

(८) प्रवव्रध्यश्वरथवीतये इति क० ग० घ० च०।

(९) इत्याभ्यामिति क० ग० घ० च०।

(१०) दूत्ये इति ख० पुस्तकान्तरञ्च।

(११) रथवीतिमपश्यन्तीमिति ख० ङ०।

---

(क) ऋ० ५, ५३, १०।

रम्ये हिमवतः पृष्ठ एषचेतीति चाब्रवीत्।
ऋषेर्नियोगमाज्ञाय देव्या राज्ञा प्रचोदितः।
आदाय कन्यां तां दार्भ्य उपेयायार्चनानसम् ॥७४॥
पादौ तस्योपसङ्गृह्य स्थितः[१] प्रह्वः कृताञ्जलिः।
रथवीतिरहं दार्भ्य इति नाम प्रशंस च ॥७५॥
मया सङ्गति[२] मिच्छन्तं त्वां प्रत्याचक्षि यत्पुरा।
तत् क्षमस्व नमस्तेऽस्तु मा च मे भगवन् क्रुधाः[३] ॥७६॥
ऋषेः पुत्रः स्वयमृषिः[४] पितासि भगवन्नृषेः।
हन्त प्रतिगृहाणेमां स्नुषामित्येवमब्रवीत्[५] ॥७७॥
पाद्यार्घ्यमधुपर्कैश्च पूजयित्वाथ तं[६] नृपः।
शुक्लमश्वशतं दत्त्वा अनुजज्ञे गृहान् प्रति ॥७८॥
प्रशीयसीं[७] तरन्तञ्च पुरुमीळ्ह[८]ञ्च पार्थिवम्।
षड्भिः सनदिति स्तुत्वा जगामर्षिरपि स्वयम्[९] ॥७९॥

---

(१) स्थित्वेति ख० ङ० पुस्तकान्तरञ्च।
(२) संयोगमिति ख० ङ० पुस्तकान्तरञ्च।
(३) क्रुधः इति ख० ङ० पुस्तकान्तरञ्च।
(४) चर्षिरिति ख० ङ० पुस्तकान्तरञ्च।
(५) स्नुषान्तेऽस्त्विति चाब्रवीदिति ख० ङ० पुस्तकान्तरञ्च।
(६) चार्चनाना स्वयमिति क० घ० च०।
(७) प्रसीयसीमिति ङ० पुस्तकान्तरञ्च।
(८) पुरुमीढमिति ङ० पुस्तकान्तरञ्च।
(९) त्वयमिति क० ग० घ० च०।

ऋतेन मैत्रावरुणान्येकादशपराणि तु।
षडाश्विनानि[१] गर्भार्था पञ्चर्चूपनिषत्स्तुतिः[२] ॥८०॥
सप्तकृत्वोऽपराधे तु[३] विफले दारसंग्रहे।
ऋषिः कृतो[४]ऽश्वमेधेन भारतेनेति वै श्रुतिः[५] ॥८१॥
ततोऽष्टमे[६]ऽपराधे तु वृचद्रोण्यां स पार्थिवः।
ऋषिं[७]सेह[८] विनिश्चित्य स्कन्नं रात्रौ न्यधारयत्[९] ॥८२॥
सोऽश्विनाविति सूक्तेन तुष्टावर्षिः शुभस्पती।
तौ तं तस्मात् समुद्धृत्य चक्रतुः सफलं पुनः ॥८३॥
वृचस्तस्यैव गर्भार्थं स्वपत[१०]स्तस्य गर्भवत्।
यथा वात इति ज्ञेये त्वश्विभ्यामितरे ऋचौ[११] ॥८४॥

(१) षलाश्विनानीति क० ग० घ० च०।
(२) गर्भार्थं पञ्चर्चोपनिगत्स्तुतिरिति ग०। स्तुतिरित्यत्र तुवीति क० घ०, तुषीति च०।
(३) सप्त कृत्वापराधात् वै इति क० घ० च०, सप्तकृत्वोऽपराधात् वै इति ग०।
(४) ततः इति ङ० पुस्तकान्तरञ्च, ऋषीं कृत्वेति ग०।
(५) नः श्रुतमिति ङ० पुस्तकान्तरञ्च।
(६) तमष्टमे इति क० ग० घ० च०।
(७) ऋषीनिति ङ० पुस्तकान्तरञ्च।
(८) ऋषीसेना इति घ० च०।
(९) रात्रौ रात्रौ न्याधावयदिति क० घ० च०।
(१०) चित्रस्तस्यैव गर्भार्थस्तपतः इति ङ० पुस्तकान्तरञ्च।
(११) ज्ञेयावश्विभ्यामितरौ ह्यचाविति ख० ङ० पुस्तकान्तरञ्च।

स्रवतामपि गर्भाणां दृष्टं तदनुमन्त्रणम् ।
भावदृत्तं तु तत्तस्यास्तथारूपं हि दृश्यते ॥८५॥
जरायुर्गर्भगब्दाभ्यामेतद्रूपं हि दृश्यते[१] ।
मह्ये उपस्ये[२] सावित्रं युञ्जतेच्छावदः[३] स्तुतः ॥८६॥
पर्जन्यो बलिति त्वस्मिन्[४] पृथिवी मध्यमा तु[५]वाक्[६] ।
अद्या नो देवसवितरियं दुःस्वप्ननाशिनी[७] ॥८७॥
वारुणन्तु प्रसम्राजे षट्कमैन्द्राग्रमुत्तरम्[८] ।
विष्णुं न्यङ्[९]स्वरस्येति मारुतं सूक्तमुत्तरम्[१०] ॥८८॥
एतया मरुदाख्यातं द्यौर्नेन्द्रे प्रतिपूर्व्वकम्[११] ।

---

(१) स्रवतामपि गर्भाणामित्यादिसार्द्धश्लोकः क० ग० घ० च० चिह्नित-पुस्तकेषु नापश्यत ।

(२) मह्योपस्येतीति क० घ० च० ।

(३) सावित्रे युञ्जतेच्छेति वै इति क० ग० घ० च० ।

(४) पर्ज्जन्यस्तु बलित्येतीति ङ० पुस्तकान्तरञ्च ।

(५) स्विति ग० ।

(६) स्तुतेति ङ० पुस्तकान्तरञ्च ।

(७) एतच्छ्लोकार्द्धं क० ग० घ० च० चिह्नितपुस्तकेषु न दृश्यते ।

(८) उत्तरमित्यत्र उत्तममिति क०, इन्द्राग्नैन्द्राग्नमुच्यते इति ख०, मिन्द्राग्नैन्द्राग्नमुच्यते इति ङ० पुस्तकान्तरञ्च ।

(९) विष्णुं चिक्रमिति ङ० पुस्तकान्तरञ्च ।

(१०) उत्तममिति ख० ।

(११) एतच्छ्लोकार्द्धं क० ग० घ० च० चिह्नितपुस्तकेषु नोपलभ्यते ।

श्रीसूक्तमाशीर्वादस्तु[१] स्त्रीपुत्राणां पराणि तु[२]। ८९॥
तत्स्यादा[३]लक्ष्म्यपनुद[४] मग्निस्तत्र[५] निपातभाक्।
प्रजावान् जीवपुत्रो[६] वा गर्भकर्म्मणि संस्तुतौ ॥९०॥
नानारूपाः पयस्विन्यः[७] संस्रवन्तीति संस्तुताः[८]।
आशीर्वादेषु संज्ञासु कर्म्मसंस्थासु देवताः[९] ॥९१॥
निपातभाग् लिङ्गवाक्यात्[१०] परीक्षेतेह मन्त्रवित्।
मन्त्रप्रयोगमन्त्रयोः[११] प्रयोगो[१२] बलवत्तरः ॥९२॥

---

(१) आशीर्वादो स्यादिति ख०, आशीर्वादास्येति ङ० पुस्तकान्तरञ्च।

(२) श्रीपुत्राणां पराणि षट् इति क० घ० च०, षट् इति ग०, श्रीः पुत्राणां पराश्च षट् इति ङ० पुस्तकान्तरञ्च।

(३) तस्यादिति क० घ० च०।

(४) लक्ष्मापनिर्नोदः इति क० घ० च०, स्याद्यालक्ष्मी परेर्नोदे इति ख०, अलक्ष्मपनिर्नोदे इति ङ० पुस्तकान्तरञ्च।

(५) स्त्वत्रेति ख० ङ०।

(६) प्रजावज्जीवपुत्रः इति क० ख० ग० घ० च०, प्रजावान् जीवपुत्रा इति ङ०।

(७) यथाश्विन्यः इति ख० ग०।

(८) संस्तुताविति ङ०।

(९) कर्म्मसंस्था तु देवतेति ख०।

(१०) लिङ्गवाक्येत ख० ग०।

(११) मन्त्रप्रयोगमन्त्राणामिति ग०।

(१२) प्रयोगे इति ग०।

विधेस्तयोः परीचा[1] स्यान्मन्त्राः स्युरभिधायकाः[2] ।
तस्मात्तेन विसंवादो मन्त्राणां तद्गतानि तु ॥९३॥
गुणाभिधायकानि स्युः सविज्ञानपदानि तु ।
मन्त्रेषु गुणभूतेषु प्रधानेषु च कर्म्मसु ॥९४॥
प्रधानगुणभूताः स्युर्द्देवता इति गम्यते ।
त्रिसांवत्सरिकं सत्रं प्रजाकामः प्रजापतिः ॥९५॥
आहरत्सहितः साध्यैर्विश्वैर्द्देवैः सहेति च ।
तत्र वाग्दीचणीयायामाजगामाशरीरिणी[3] ॥९६॥
तां दृष्ट्वा युगपत्तत्र कस्याथ वरुणस्य च ।
शुक्रं चस्कन्द तद्वाभ्यामग्नौ प्रास्तं[4] यदृच्छया ॥९७॥
ततोऽर्चिर्भ्यो भृगुर्जज्ञे अङ्गारेभ्योऽङ्गिरा[क][5] ऋषिः ।
प्रजापतिस्तुतौ दृष्ट्वा दृष्टा वागभ्यभाषत ॥९८॥
आभ्यामृषिस्तृतीयोऽपि भवेद्द्वैव मे सुतः ।
प्रजापतिस्तथेत्युक्तः प्रत्यभाषत भारतीम् ॥९९॥
ऋषिरत्रिस्ततो जज्ञे सूर्य्यानलसमद्युतिः ।
योऽङ्गारेभ्य ऋषिर्जज्ञे तस्य पुत्रो बृहस्पतिः ॥१००॥

---

(१) परीच्यः इति ङ० ।
(२) अभिधानकाः इति ख०, अभिधानिकाः इति ग० ।
(३) शरीरिणीति युक्तः पाठः ।
(४) प्रास्यमिति ख०, प्रास्येति ग० ।
(५) अङ्गारस्थाङ्गिरा इति ख०, अङ्गारेष्वङ्गिरा इति ग० ।

---

(क) ऋ० १, ३१, १ ।

बृहस्पतेर्भरद्वाजो विदधीति[१] य उच्यते[२] ।
सहस्वान्सोऽसुर्यश्च[३] स एवाङ्गिरसो नपात्[क] ॥१०१॥
सपुत्रस्य तु तस्येदं[४] मण्डलं षष्ठमुच्यते ।
त्वं ह्यग्न इति तत्राद्यान्याग्नेयानि त्रयोदश ॥१०२॥
सूक्तानि त्रीणि मूर्धानमग्नेर्वैश्वानरस्य तु ।
एकान्नविंशतिश्चैव[५] पित्रेन्द्र्यैन्द्राण्य[६]तः परम् ॥१०३॥
अग्ने सखे षडित्यस्यां द्वौ देवौ तु[७] निपातितौ ।
प्रीतये नूम[८] इत्येते वैश्वदेव्यावृचौ तु ते[९] ॥१०४॥
ऋग्द्वितीया पदस्यान्त्यसैन्द्रमेति[१०] गवां स्तुतिः ।
आमन्त्रणाम[ख] इत्यस्यां वायुरिन्द्रश्च संस्तुतौ[११] ॥१०५॥
इन्द्रः प्राधान्यतो वात्र स्तुतो वायुर्निपातभाक् ।

(१) विदधीतीति ङ० ।
(२) प्रजावान् जीवपुत्रो वा इत्यादि विदधीति य उच्यते इत्यन्तपाठः क० घ० च० चिह्नितपुस्तकेषु नोपलभ्यते ।
(३) सुरन्ध्रश्चेति क० घ० च०, सुरंश्चेति ख० ग० ।
(४) सपुत्रस्य तस्येदमिति क० ग० घ० च० ।
(५) एकान्नविंशदैन्द्राणीति ख०, एकान्नविंशदेवाग्नेति ङ० । एकान्नविंश तिरिति सर्वपुस्तकेषु ।
(६) पित्र्यन्त्यैन्द्राणीति पाठः शुद्धः ।
(७) देवौ वापीति क० ग० घ० च० ।
(८) नम इति क० घ० च० ।
(९) स्तुते इति ङ० ।
(१०) चेनाति ग० ।
(११) इन्द्रवायू सह स्तुताविति ङ० पुस्तकपाठः ।

(क) ऋ० ६. १६. १ । (ख) ऋ० ६. ३७, ३ ।

अयं देवस्तृचं सौम्यमैन्द्रमेके प्रचक्षते[१] ॥१०६॥
शरीरं चक्षुरित्यस्यां तृचोऽधीति[२] बभ्रोः[क] स्तुतिः[३]।
पितरं स्तौति शंयुश्च[ख] तृचस्यान्ते पदे स्वयम्[४] ॥१०७॥
स्वादुष्किलायमित्येताः[ग] पञ्चर्चः सौम्य एव वा[५]।
इन्द्रः प्रधानतो वात्र स्तुतः सोमो निपातभाक् ॥१०८॥
इन्द्रस्यैन्द्रनिपातोऽयं स्तूयन्ते ह्यैतरेयके[६]।
अगव्यूतिः[घ] स्तौति देवान् पादो भूमिमथोत्तरः ॥१०९॥
बृहस्पतिं तृतीयोऽस्तौत्[७] त्विन्द्र[८]मेवोत्तमं पदम्।
ऋषिस्तु तौ तथेत्युक्त्वा पायुं[ङ] पुत्रमभाषत ॥११०॥
अधर्षणीयौ शत्रूणां कुरुष्वैतौ[९] नृपाविति।
पितरं स तथेत्युक्त्वा युद्धोपकरणं तयोः ॥१११॥
जीमूतस्येति[१०] सूक्तेन पृथक्केनान्वमन्त्रयत्।

(१) इन्द्रः प्राधान्यतो वात्रेति श्लोकः क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु न दृश्यते।
(२) अधीतिरिति विसर्गयुक्तपाठः शुद्धः।
(३) य आनयदिति तस्य तृचोऽधीति बभ्रुस्तुतिरिति क॰ ग॰ घ॰ च॰।
(४) सूक्तस्यान्ते पदे स्वकमिति ख॰ ङ॰ पुस्तकान्तरञ्च।
(५) इति तु सौम्यः पञ्चर्च उत्तरः इति क॰ ग॰ च॰।
(६) इन्द्रः प्रधानतो वात्रेत्यादि स्तूयन्ते ह्यैतरेयके इत्यन्तपाठः क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु न विद्यते। स्तूयते इति शुद्धः पाठः।
(७) तृतीयस्त्विति क॰ ङ॰ पुस्तकान्तरञ्च।
(८) त्वैन्द्रमिति पाठः साधुः।
(९) कुरु पुत्रेति ङ॰ पुस्तकान्तरञ्च।
(१०) जीमूतीयेनेति क॰ घ॰ च॰, जीमूतस्येनेति ग॰।

(क) ऋ॰ ६, ४५, ३३। (ख) ऋ॰ १, ३४, ६। (ग) ऋ॰ ६, ४४, २१। (घ) ऋ॰ ६, ४७, २०। (ङ) ऋ॰ २, २, ४।

प्रथमा त्वस्य सूक्तस्य योद्धारं स्तौति वर्म्मिणम् ॥११२॥
धनुः स्तौति[1] द्वितीया तु तृतीया ज्याभिमन्त्रिणी[2]।
स्तौति चार्त्नी[(क)] चतुर्थी च[3] गिषुधिं स्तौति पञ्चमी ॥११३॥
अर्द्धेन[4] सारथिं षष्ठ्या रश्मयोऽर्द्धेन संस्तुताः।
अश्वांस्तु सप्तमी स्तौति आयुधागारमष्टमी ॥११४॥
नवमी रथगोपांस्तु दशमी रणदेवताः।
इषुमेकादशी[5] स्तौति द्वादशी कवचस्तुतिः ॥११५॥
त्रयोदशी कशां स्तौति हस्तत्राणं चतुर्दशी।
प्रथमे पञ्चदश्यास्तु पादे दिग्ध[6] इषुः स्तुतः[7] ॥११६॥
अयोमुखो द्वितीये तु अर्द्धेऽस्त्रं[8] वारुणं परम्[9]।
षोड़श्यां[10] त्वस्य सूक्तस्य धनुर्मुक्त इषुः स्तुतः ॥११७॥
सप्तदश्यां तु युद्धादेः[11] कवचस्य च बन्धनं[12]।

(१) धनुश्चेति क॰ घ॰ च॰।
(२) ज्याभिमन्त्रिणीति क॰ घ॰ च॰।
(३) स्तौत्युगार्त्नी चतुर्थी चेति क॰ ग॰ घ॰ च॰।
(४) अर्थेनेति क॰ घ॰ च॰।
(५) इषुधिश्चैकादशीति क॰ घ॰ च॰, इषुश्चैकादशीति ग॰।
(६) दिग्धः इति ग॰।
(७) इषुस्ततः इति ग॰ ङ॰।
(८) अर्द्धचर्मेति ङ॰।
(९) परे इति ख॰।
(१०) षोड़श्येति क॰ ग॰ घ॰ च॰।
(११) युद्धदेश्येति क॰ घ॰ च॰, योद्धादेरिति ङ॰।
(१२) बध्यतः इति क॰ ग॰ घ॰ च॰।

(क) ऋ॰ ६, ७५, ४।

स्तुतिरष्टादृग्भी ज्ञेया युयुत्सोर्द्व्यृगुत्तमा[१] ॥११८॥
आशास्ते चोत्तमे पादे ह्यृषि[२]रात्मन आशिषः।
सूक्तेनानेन तु स्तुत्वा सञ्ज्ञामाज्ञान्यृषिस्तयोः ॥११९॥
ततः[३] प्रस्थापयामास पुनर्वारशिखान्[४] प्रति।
एतद्‌यत्ते चतसृभी राज्ञोः साहाय्यकाङ्क्षया ॥१२०॥
भरद्वाजोऽभितुष्टाव प्रीतस्तेन पुरन्दरः।
अभ्यावर्त्तिनमासाद्य ह्यर्युपीयानदीतटे ॥१२१॥
सहितस्त्रायमानेन[क] जघानैतान् शचीपतिः[५]।
एवं[६] वारशिखा[७]ञ्जित्वा तावभ्यावर्त्ति[८]सार्ञ्जयौ[ख] ॥१२२॥
भरद्वाजाय गुरवे ददतुर्विविधं वसु।
भरद्वाजस्य गर्गस्य दृष्टाविन्द्रेण वै पथि ॥१२३॥
द्वौ च[९] प्रस्तोक[ग] इत्याभिर्दानं तस्मै[१०] शशंसतुः।

---

(१) स्तुतिरुत्तमेति क० ग० घ० च०।
(२) ऋषिरिति ङ०।
(३) तयोरिति क० घ० च०।
(४) वारिशिखानिति ग०।
(५) एतद्‌यत्ते चतसृभिरित्यादि जघानैतान् शचीपतिरित्यन्तपाठः क० ग० घ० च० चिह्नितपुस्तकेषु न दृश्यते।
(६) तौ त्विति क० ग० घ० च०।
(७) वारिशिखानिति ग०।
(८) ततोऽभ्यावर्त्तीति क० ग० घ० च०।
(९) दयानिति क० ग० घ० च०।
(१०) तद्वै इति क० ग० घ० च०।

---

(क) ऋ० ६, २७, ८। (ख) ऋ० ६, ४७, २५। (ग) ऋ० ६, ४७, २२।

[1]प्रसङ्गादिह[2] याः सूक्ते देवताः परिकीर्त्तिताः ॥१२४॥
ता एव सूक्तभाजस्तु मेने राथीतरीसुतः[3]।
प्राजापत्यो मरीचिर्हि मारीचः कश्यपोऽभवत्[4] ॥१२५॥
तस्य देव्योऽभवञ्जाया[5] दाचायण्यस्त्रयोदश।
अदितिर्दितिर्दनुः काला दनायुः सिंहिका मुनिः[6] ॥१२६॥
क्रोधावशा वरिष्ठा च सुरभिर्विनता तथा।
कद्रुश्चैवेति दुहितॄः कश्यपाय ददौ स च[7] ॥१२७॥
तासु देवासुराश्चैव गन्धर्वोरगराक्षसाः।
वयांसि च पिशाचाश्च जज्ञिरेऽन्याश्च जातयः ॥१२८॥
तत्रैका त्वदितिर्देवी द्वादशाजनयत्[8] सुतान्।
भगश्चैवार्य्यमांशश्च[क] मित्रो वरुण एव च ॥१२९॥

---

(१) ख० ङ० चिह्नितपुस्तकयोः पुस्तकान्तरे च, प्रसङ्गादिह याः सूक्ते इति श्लोकार्द्धात् प्राक्,—

ऋचं यः पश्यति त्वाव तानं तत्र च तस्य तु।
ऋचैकया द्वयोः श्रमे दत्तं सङ्कीर्त्तयन् स्वयम् ॥

इत्यधिकं पठितम्।

(२) प्रसङ्गा त्विहेति क० ग० घ० च०।

(३) राथीतरस्तुताविति क० घ० च०।

(४) मुनिरिति क० ग० घ० च०।

(५) जाता इति क० घ० च०।

(६) विशाविति ख०।

(७) अदितिरित्यादिसार्द्धैकश्लोकः क० ग० घ० च० चिह्नितपुस्तकेषु न विद्यते।

(८) द्वन्दशोऽजनयदिति क० ग० घ० च०।

---

(क) ऋ० २. १, ४।

धाता चैव विधाता च विवस्वांश्च महाद्युतिः।
त्वष्टा पूषा तथैवेन्द्रो द्वादशो विष्णुरुच्यते[1] ॥१२०॥
द्वन्द्वं तस्यास्तु तज्जज्ञे[2] मित्रश्च वरुणश्च ह[3]।
तयोरादित्ययोः सत्रे दृष्ट्वाप्सरसमुर्वशीम् ॥१२१॥
रेतश्चस्कन्द कुम्भे तु[4] न्यपत[5]द्वासतीवरे।
तेनैव तु मुहूर्तेन वीर्यवन्तौ तपस्विनौ ॥१२२॥
अगस्त्यश्च वसिष्ठश्च तत्रर्षी संबभूवतुः।
बहुधा पतिते शुक्रे कलसेऽथ जले स्थले ॥१२३॥
स्थले वसिष्ठस्तु मुनिः सम्भूत ऋषिसत्तमः।
कुम्भे त्वगस्त्यः सम्भूतो जले मत्स्यो महाद्युतिः[6] ॥१२४॥
उदियाय ततोऽगस्त्यः शम्या[क]मात्रो महायशाः[7]।
मानेन सम्मितो यस्मात् तस्मान्मान्य इहोच्यते ॥१२५॥
यदा कुम्भादृषिर्जातः कुम्भेनापि हि[8] मीयते।

---

(१) भगश्चैवार्यमांशश्चेत्यादिसार्द्धश्लोकः ग० घ० च० चिह्नितपुस्तकेषु नोपलभ्यते।

(२) जज्ञाते इति ङ०।

(३) मित्रस्य वरुणस्य चेति क० ख० ग० च०, सत्रेति ख० ग०।

(४) तत्कुम्भे इति ग० ङ० पुस्तकान्तरञ्च।

(५) ह्यपतदिति ख० ङ० पुस्तकान्तरञ्च।

(६) बहुधा पतिते शुक्रे इत्यादिसार्द्धश्लोकः क० ग० घ० च० चिह्नितपुस्तकेषु न पठितः।

(७) महातपाः इति ख० ङ० पुस्तकान्तरञ्च।

(८) कुम्भे नारीहेति क० घ० च०।

---

(क) ऋ० १, ८३, ४।

कुम्भ इत्यभिधानन्तु परिमाणस्य लक्षणम्[१] ॥१२६॥
ततोऽप्सु म्रियमाणासु वसिष्ठः पुष्करे स्थितः।
सर्व्वतः[२] पुष्करं तत्र विश्वेदेवा अधारयन्॥१२७॥
उत्थाय सलिलात्तस्मादथ तेपे महत्तपः।
नामास्य गुणतो जज्ञे वसतेः श्रेष्ठ्यकर्मणः[३] ॥१२८॥
अदृश्यन्नृषिभिर्हीन्द्रं[४] सोऽपश्यत्तपसा पुरा।
सोमभागानथो[५] तस्मै प्रोवाच हरिवाहनः॥१२९॥
ऋषयो वा इन्द्रमिति ब्राह्मणात्तद्धि दृश्यते[६]।
वसिष्ठस्य वसिष्ठास्य[७] ब्राह्मणा वै ततोऽभवन्॥१४०॥
सर्व्वकर्म्मसु यज्ञेषु दीक्षणीयास्ततोऽभवन्[८]।
तस्मादद्यापि[९] वासिष्ठाः सदस्यास्त्विह कर्म्मणि[१०] ॥१४१॥

---

(१) लक्ष्यते इति क० घ० च०।

(२) सर्व्वत्रेति क० ग० घ० च०।

(३) श्रेष्ठकर्म्मणः इति पाठः साधुः। श्रेष्ठकर्म्मणेति ङ० पुस्तकान्तरञ्च।

(४) चेन्द्रमिति ङ० पुस्तकान्तरञ्च।

(५) सोमभागांस्ततः इति ख० ङ० पुस्तकान्तरञ्च।

(६) एतच्छ्लोकार्द्धं क० ग० घ० च० चिह्नितपुस्तकेषु न दृश्यते।

(७) वासिष्ठाश्च वसिष्ठश्चेति पाठः सङ्गतः। वसिष्ठाश्च वसिष्ठाश्चेति क० च०, वसिष्ठाश्च वसिष्ठाश्चेति ग० घ०।

(८) सर्व्वमर्म्मसु यज्ञेषु दक्षिणीयतमास्तथेति क० घ० च०।

(९) येऽद्यापीति क० ग० घ० च०।

(१०) वसिष्ठाः सदस्याः स्युस्तु कर्हिचिदिति क० ग० घ० च०।

अर्चयेद्[1] दक्षिणाभिस्तान् मानवेयो श्रुति[2]स्त्वियम्[3]।
ऋषिस्तु मैत्रावरुणिः सूक्तैः षोडशभिः परैः ॥१४२॥
तुष्टाव चाग्नि[क]मित्यग्निमाप्रस्त्वच जुषस्व नः[ख]।
आग्नये[ग]ऽथ प्रयजाजो[घ] द्वितीयं प्राग्नये[ङ] त्वचम् ॥१४३॥
वैश्वानरीयाण्येतानि[4] त्वे हे[च]न्द्राणि पराण्यतः।
दश पञ्च च सूक्तानि निपातो मरुतां स्तुतिः ॥१४४॥
नकिः सुदास[छ] इत्यस्यां दानं पैजवनस्य तु।
वसिष्ठेन चतुर्भिग्नि[5]र्द्वे नप्तु[ज]रिति कीर्त्तितम् ॥१४५॥
संवादः सूक्तमैन्द्रं[6] वाश्विन्यं तन्तु[7] प्रपद्यते।
वसिष्ठागस्त्ययोश्च कीर्त्यते तनयैः सह ॥१४६॥
इन्द्रेण चैव संवादो महिमा जन्म कर्म च।

---

(१) पूजयेदिति ख० ङ० पुस्तकान्तरञ्च।
(२) स्तुतिरिति क० घ० च०।
(३) इत्थयं मानवो श्रुतिरिति ख० ङ०।
(४) वैश्वानरीयमित्येतदिति क० घ० च०।
(५) चतुर्भिस्त्विति क० ग० घ० च०।
(६) संवादमैन्द्रसूक्तमिति ङ० पुस्तकान्तरञ्च, संवादे सूक्तमैन्द्रे इति ख०।
(७) वाश्विनं वस्त्विति क० ग० घ० च०।

---

(क) ऋ० ७, १, १। (ख) ऋ० ७, २, १। (ग) ऋ० ७, ५, १।
(घ) ऋ० ७, ६, १। (ङ) ऋ० ७, १३, १। (च) ऋ० ७, १८, १।
(छ) ऋ० ७, ३२, १०। (ज) ऋ० ७, १८, २२।

पराणि प्रे[क]ति चत्वारि वैश्वदेवानि यानि[१] तु ॥१४७॥
स्तौत्युगन्ना[ख]महिं तव मानो[ग]ऽहिर्बुध्न्य[घ] एव च ।
अहिराहन्ति मेघान् स एति वा तेषु मध्यमः ॥१४८॥
योऽहिः स बुध्न्यो बुध्नेति सोऽन्तरिक्षेऽभिजायते[२] ।
उदुष्य[ङ]सवितुः सूक्तं[३] आद्यो [च]वाजिनदेवताः[४] ॥१४९॥
तृचो[५]ऽर्द्धर्चस्य पादोऽत्र प्रथमायामृषि स्तुतः[६] ।
पादस्यैव तृतीयोऽत्र प्रथमायामृषि स्तुतः[७] ॥१५०॥
यथार्द्धर्चो भगमुग्र[छ]स्तथा नूनं भगो[ज]ऽपि च ।
स हि रत्नानि सविता सुवातीति भगः स वा[८] ॥१५१॥

---

(१) तत्रेति ख० ङ० पुस्तकान्तरञ्च ।
(२) अहिराहन्तीत्यादि सोऽन्तरिक्षेऽभिजायते इत्यन्तपाठः क० ग० घ० च० चिह्नितपुस्तकेषु न विद्यते ।
(३) सूक्ते इति ख० ङ० ।
(४) वाजिनदेवत इति ख० ङ० पुस्तकान्तरञ्च ।
(५) तृचः इति ग० ।
(६) तृचोऽर्द्धस्य भागोऽत्र भगमुग्र इति श्रुतिरिति ख० ङ० पुस्तकान्तरञ्च । श्रुतिरित्यत्र स्तुतः इति ग० ।
(७) पञ्चम्यामहिर्देवतः इति क० ग० घ० च० ।
(८) एष श्लोकः क० ग० घ० च० चिह्नितपुस्तकेषु नापठ्यत ।

---

(क) ऋ० ७, ३९, १ । (ख) ऋ० ७, ३४, १६ । (ग) ऋ० ७, ३४, १७ । (घ) ऋ० ७, ३४, १७ । (ङ) ऋ० ७, ३८, १ । (च) ऋ० ७, ३८, ७ । (छ) ऋ० ७, ३८, ६ । (ज) ऋ० ७, ४१, ५ ।

वैश्वदेवानि पञ्चोर्ध्वपञ्चर्चो भगदेवता:(१) ।
प्रातर्जित(क)मुषसोऽन्त्या दृष्टुं स स्तौत्याशि(२)रेव वा ॥ १५२॥
एके तु प्रात(ख)रित्यस्यां भगमेव(३) प्रचक्षते ।
आद्यान्त्ये ते तु ऋषय: कीर्त्तयन्ति(४) प्रसङ्गत: ॥१५३॥
सूक्तेषु(५) देवता मान्या मान्यास्तत्र स्तुवन्ति(६) च ।
सालोक्यात्(७)साहचर्य्याद्वा संस्तवादथ वा पुन: ॥१५४॥
गणस्थानाद्भक्तितो वा कीर्त्यन्तेऽन्यास्तु देवता: ।
दाधिक्रमथ सावित्रं रौद्रमित्यनुपूर्व्वश: ॥१५५॥
दधिक्रां(ग) प्रथमायान्तु(८) देवता: परिकीर्त्तिता: ।
ता ज्ञेया आप(घ) आप्यं स्यादार्भव: प्रथमस्तृच: ॥१५६॥
उत्तमा वैश्वदेवी वा आर्भवी वा निगद्यते(९) ।

---

(१) पञ्चोर्ध्व: पञ्चर्चो भगदैवत: इति क० ख० ग० घ० च० ।

(२) दृष्टु: स्तौत्याशीरिति क० घ० च०, दृष्ट्वात्राशीरिति ङ० पुस्तकान्तरञ्च ।

(३) प्रातरित्येतां भागीमेवेति ख० ङ० पुस्तकान्तरञ्च ।

(४) आद्यान्त्येषु तु स्येषु तु यत्कीर्त्तयन्तीति ङ० पुस्तकान्तरञ्च ।

(५) सूक्तेऽस्मिन्निति ख० ग० ङ० पुस्तकान्तरञ्च ।

(६) त्वन्या अन्यास्तत्र भवन्तीति ख० ग० ङ० पुस्तकान्तरञ्च ।

(७) कालादिति ख० ङ० पुस्तकान्तरञ्च ।

(८) प्रथमायास्त्विति क० ग० घ० च० ।

(९) वैश्वदेवी तु समुद्रज्येष्ठेत्यपां स्तुतिरिति क० घ० च० ।

(क) ऋ० ७, ४१, २ । (ख) ऋ० ७, ४१, १ । (ग) ऋ० ७, ४४, १ ।
(घ) ऋ० ७, ४७, १ ।

वैश्वदेवे तथा प्रस्ब[1] आर्भवं प्रस्यते हि तत्।
दशमेऽह्नि समस्तश्च समुद्रज्येष्ठा[क] अपां स्तुतिः[2] ॥१५७॥

इति बृहद्देवतायां पञ्चमोऽध्यायः।

---

(१) प्राप्ते इति ग०।
(२) वैश्वदेवे तथा प्रस्ब इत्यादि स्तुतिरित्यन्तपाठः क० घ० च० चिह्नित-पुस्तकेषु न विद्यते।

---

(क) ऋ० ७, ४७, १।

## अथ षष्ठोऽध्यायः।



आ मा[क]मिति तु सूक्तेन प्रत्यृचं देवताः स्तुताः।
मित्रावरुणावग्निश्च देवा नद्यस्तथैव च[१] ॥१॥
तृचावादित्यदेवत्यौ रोदस्योः प्रे[ख]ति यस्तृचः।
वास्तोष्पत्यश्चतस्रश्च[१] प्रस्वापिन्य ऋचः स्मृताः[२] ॥२॥
परं[४] चत्वारि सूक्तानि मारुतानि क ई[ग]मिति।
तेषां तु पितरं देवं त्र्यम्बकं[घ] स्तौत्यृगुत्तमा ॥३॥
स्तुतौ तु मित्रावरुणौ सूक्तैर्य[ङ]दिति सप्तभिः।
अश्विनौ तु स्तुतौ[५] देवावष्टभिः प्रति वा[च]मिति ॥४॥
यद[छ]द्योत्सूर्य[ज] इति तिस्र उ[झ]द्वेतीत्यर्द्धपञ्चमाः।
सौर्य्यं तच्चक्षु[ञ][६]रिति तु गीयते चक्षुर्देवता ॥५॥

(१) एतच्छ्लोकार्द्धं क० ग० घ० च० चिह्नितपुस्तकेषु न पठितम्।
(२) स्विति क० ग० घ० च०।
(३) त्वष्टौ प्रस्वापनी स्मृता इति क० ग० घ० च०।
(४) ततः इति ख० ङ० पुस्तकान्तरञ्च।
(५) परैरिति क० ग० घ० च०।
(६) तच्चक्षु तच्चक्षुरिति ख० ङ० पुस्तकान्तरञ्च।

(क) ऋ० ७, ५०, १। (ख) ऋ० ७, ५३, १। (ग) ऋ० ७, ५६, १। (घ) ऋ० ७, ५९, १२। (ङ) ऋ० ७, ६०, १। (च) ऋ० ७, ६५, १। (छ) ऋ० ७, ६०, १। (ज) ऋ० ७, ६२, १। (झ) ऋ० ७, ६३, १। (ञ) ७, ६६, १६।

आदित्यानां तद्वो[क] अद्य द्वे ऋचौ शौनकोऽब्रवीत्।
अन्याः सर्व्वा ऋचः सौर्य्या यदद्याद्याः[ख]प्रकीर्त्तिताः ॥६॥
इमे चेतार[ग] इत्याद्याः[१] सचे मित्रो मितः स्तुतः।
अर्य्यम्णो वरुणस्यापि मित्रस्यैता नव स्मृताः ॥७॥
यदद्य सूरे[घ] इत्याद्या दशादित्या ऋचः स्मृताः।
सविता चा[२]दितिर्मित्रो वरुणश्चार्य्यमा भगः ॥८॥
स्तुता उदु त्य[ङ]दित्येतास्तिस्रः सौर्य्यस्ततः पराः।
आशीस्तच्चक्षु[च]रित्येतामाचार्य्यः शौनकोऽब्रवीत्[३] ॥९॥
उषास्तु सप्तभिर्व्युषाः[छ] सूक्तान्येभ्यः पराणि तु।
चत्वारीन्द्रावारुणानि[४] इन्द्रावरुणयोः स्तुतिः ॥१०॥
उदु ज्योति[ज]रिति त्वस्मिन्नर्द्धर्चे मध्यमः स्तुतः[५]।
वरुणस्य गृहायातो वसिष्ठः स्वप्न[६] आचरत् ॥११॥
प्रविवेशाथ तं तत्र श्वा नदन्नभ्यवर्त्तत[७]।

---

(१) इत्याद्यैरिति पाठः सङ्गतार्थः।
(२) चेति ख० ङ०।
(३) आदित्यानां तद्वो अद्येत्यादयश्चत्वारः श्लोकाः क० ग० घ० च० चिह्नितपुस्तकेषु नेष्यन्ते।
(४) इन्द्रावरुणोतीति क० ग० घ० च०।
(५) एतच्छ्लोकार्द्धं क० ग० घ० चिह्नितपुस्तकेषु नापश्यत।
(६) चौर्य्यमिति ङ०।
(७) अभ्यधावतेति क० ग० घ० च०।

---

(क) ऋ० ७, ६६, १२। (ख) ऋ० ७, ६६, ४। (ग) ऋ० ७, ६०, ५। (घ) ऋ० ७, ६६, ४। (ङ) ऋ० ७, ६६, १४। (च) ऋ० ७, ६६, १६। (छ) ऋ० ७, ७५, १। (ज) ऋ० ७, ७६, १।

क्रन्दन्तं सारमेयं स धावन्तं द्रष्टुमुद्यतं ॥१२॥
यदर्जुने[क]ति च त्रिभिः सान्त्वयित्वा व्यसुष्वपत्[१]।
स तं[२] प्रस्वापयामास जनमन्यञ्च वारुणम् ॥१३॥
ततस्तु वरुणो राजा स्वान् पाशान् प्रत्यमुञ्चत[३]।
स बद्धः[४] पितरं सूक्तैश्चतुर्भिरिति उत्तरैः[५] ॥१४॥
अभितुष्टाव धीरे[ख]ति मुमोचैनन्ततः पिता।
ध्रुवासु त्वे[ग]ति चोक्तायां पाशा अस्मात्प्रमोचिरे[६] ॥१५॥
पराणि त्रीणि सूक्तानि वायव्यानि प्रवीरया[घ]।
अत तास्त्वे[७]न्द्रवायव्याः स्मृचो[८] यासु[९] द्विवत्स्तुतिः ॥१६॥
प्रवीरयोक्ता वायव्याः प्रा उ[१०] गीत्यैतरेयके।

---

(१) क्रन्दन्तमित्यादि सान्त्वयित्वा व्यसुष्वपदित्यन्तपाठः क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु न विद्यते।
(२) एवमिति ख॰ ङ॰ पुस्तकान्तरञ्च।
(३) स्वैः पाशैः प्रत्यबध्यत इति क॰ ग॰ घ॰ च॰।
(४) बुद्धेति क॰ घ॰ च।
(५) बद्धः स वारुणैः पाशैः ध्रुवा सुत्वेति दृश्यते इति ख॰ ङ॰ पुस्तकान्तरञ्च।
(६) मुमुचिरे इति पाठः शुद्धः।
(७) त्वैति ख॰ ङ॰ पुस्तकान्तरञ्च।
(८) स्तुताविति क॰ ग॰ घ॰ च॰।
(९) यास्त्विति ख॰ ङ॰ पुस्तकान्तरञ्च।
(१०) प्रास्त्विति ख॰।

---

(क) ऋ॰ ७, ५५, २। (ख) ७, ८६, १। (ग) ऋ॰ ७, ८८, ७। (घ) ऋ॰ ७, ६०, १।

पदस्य व्यत्ययं कृत्वा वायोः प्राधान्यमुच्यते ॥१७॥
ते सत्येन द्वचो यावन्नरस्त्वतुर्छचः पुनः।
उभन्तिका[क] प्रसोता[ख] वर्गद्वयोरेता नव स्मृताः[१] ॥१८॥
ऐन्द्राग्ने शुचि[ग]मित्येते प्रेति[घ] सारस्वते परे।
स्तुतश्चैव सरस्वांस्तु[२] जनियन्त[ङ]स्त्वतुर्छचैः[३] ॥१९॥
राजा वर्षसहस्राणि[४] दीर्घसत्त्राङ्गुषः पुरा।
सचारैकरथेनेमां भुवन् सर्व्वाः समुद्रगाः ॥२०॥
यद्व्ये वहत भागान् मे[५] द्वन्द्वशो वाप्यनेकशः[६]।
प्रत्यूचुस्तं नृपं नद्यस्त्वाल्पवीर्याः कथं वयं ॥२१॥
वहेम भोगान् सर्वांस्ते सत्रे वार्षसहस्रिके[७]।

(१) प्रवीरयोक्ता वायव्या इत्यादि द्वयोरेता नव स्मृता इत्यन्तपाठः क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु नालोक्यते।

(२) द्वेधा सरस्वान् स इतीति ङ॰ पुस्तकान्तरञ्च। द्वेधा इत्यत्र तृचे इति ख॰।

(३) चतस्तृभिरिति क॰ घ॰ च॰ चतितृभिरिति ग॰।

(४) वर्षसहस्रायेति ख॰ ग॰ ङ॰ पुस्तकान्तरञ्च।

(५) भोगान् मे इति पाठो युक्तः उत्तरत्र तथादर्शनात्। ऽपहृत मां सर्व्वामिति क॰ घ॰ च॰, वहथ भागान् मे इति ग॰, वहत माः सर्व्वाः इति ङ॰।

(६) वाथ वैकशः इति क॰ ख॰ ग॰ घ॰ च॰।

(७) वर्षसहस्रके इति ख॰ ङ॰।

(क) ऋ॰ ७, ९१, २। (ख) ऋ॰ ७, ९२, २। (ग) ऋ॰ ७, ९३, १। (घ) ऋ॰ ७, ९५, १। (ङ) ऋ॰ ७, ९६, ४।

सरस्वतीं प्रपद्यस्व सा त्वा[1] वक्ष्यति नाहुष ॥२२॥
तथेत्युक्त्वा जगामाशु आपगां[2] स सरस्वतीम्।
सा चैनं प्रतिजग्राह दुदुहे च पयो घृतम्[3] ॥२३॥
एतदत्यद्भुतं कर्म्म सरस्वत्या नृपं प्रति।
वारुणिः[4] कीर्त्तयामास प्रथमस्य द्वितीयया ॥२४॥
द्वे बार्हस्पत्ये ऐन्द्रे च[5] वैष्णवे तु[6] परे ततः।
उत्तमैन्द्र्यश्च तिस्रः[क] स्युः[7] पर्ज्जन्ये तिस्र उत्तरे ॥२५॥
आशीर्ऋक् प्रथमा तत्र प्रथमस्य तृतीयया।
यज्ञे आद्येन्द्रमेवास्तौदन्त्या त्विन्द्राबृहस्पती[8] ॥२६॥
तृतीया नवमी चैव स्तौतीन्द्राब्रह्मणस्पती[9]।

(१) ते इति ख० ङ० पुस्तकान्तरञ्च।
(२) जगामाथ पावनीमिति ख० ङ० पुस्तकान्तरञ्च।
(३) प्रतिजग्राह सा चैनं पयः सर्पिश्च दुह्यतीति क० ग० घ० च०।
(४) वारुणः इति ख०।
(५) ऐन्द्रे यज्ञे दिवः सूक्ते इति क० घ० च०, यज्ञे बार्हस्पत्यमैन्द्रमिति ग०।
(६) चेति ख० ङ० पुस्तकान्तरञ्च।
(७) ऋचो द्वितीयोऽग्मैन्द्रेति क० घ० च०।
(८) आशीर्ऋक् प्रथमा तत्रेत्यादि अन्त्या त्विन्द्रा बृहस्पती इत्यन्तपाठः क० ग० ध० च० चिह्नितपुस्तकेषु नोपलभ्यते। तेषु अस्मिन् स्थले, स्तौतीन्द्रं प्रथमा स्वत्र द्वितीयाद्या बृहस्पतिं। इति श्लोकार्द्धं वर्त्तते।
(९) सहेन्द्राब्रह्मणस्पती इति ख० ङ० पुस्तकान्तरञ्च।

(क) ऋ० ७, १०१, १।

संवत्सर(क)न्तु माण्डूकमैन्द्रासोमं(१) परन्तु यत् ॥२७॥
ऋषिर्ददर्श रक्षोघ्नं(२) पुत्रशोकपरिप्लुतः ।
हते पुत्रशते क्रुद्धः सौदासैर्दुःखितस्तदा(३) ॥२८॥
ये पाकशंस(ख)मृक् सौम्या(४) आग्नेयी तत उत्तरा ।
एकादशी वैश्वदेवी सौम्यस्तस्याः परो तृचः(५) ॥२९॥
यदि वाह(ग)मृगाग्नेयी ऐन्द्री यो मे(घ)ति तु स्मृता(६) ।
ग्रावणी प्रयाजिगाती(ङ)ति वितिष्ठध्वं(च) तु मारुती ॥३०॥
प्रवर्त्तये(छ)ति पञ्चैन्द्य ऐन्द्रासोमीत्यृगुत्तमा ।
ऋषिस्त्वाशिषमाशास्ते मानो रक्ष(ज) इति तृचि(७) ॥३१॥
दिवश्चैव पृथिव्याश्च तथा पालनमात्मनः ।
उलूक यातुं(झ)(८) जह्येतान्नानारूपान्निशाचरान्(९) ॥३२॥

---

(१) मण्डूका इन्द्रासोममिति ख० ङ० पुस्तकान्तरञ्च ।
(२) राक्षोघ्नमिति क० घ० ङ० च० ।
(३) एतच्छ्लोकार्द्धं क० घ० च० चिह्नितपुस्तकेषु नेष्यते ।
(४) सौम्याविति ङ० ।
(५) द्यृचः इति ग० ।
(६) यो मेतीन्द्रः स्तुतोऽर्द्धयेति ङ० पुस्तकान्तरञ्च ।
(७) तृचे इति क० घ० च० ।
(८) यात्विति क० ख० ग० घ० च०, यान्त्विति पुस्तकान्तरम् ।
(९) एष श्लोकः क० घ० च० चिह्नितपुस्तकेष नेष्यते ।

---

(क) ऋ० ७, १०३, १ । (ख) ऋ० ७, १०४, ९ । (ग) ऋ० ७, १०४, १४ । (घ) ऋ० ७, १०४, १६ । (ङ) ऋ० ७, १०४, १७ । (च) ऋ० ७, १०४, १८ । (छ) ऋ० ७, १०४, १९ । (ज) ऋ० ७, १०४, २३ । (झ) ऋ० ७, १०४, २२ ।

पञ्चदश्यान्तु सूक्तस्याथाष्टम्यां[1] चैव वारुणिः।
दुःखशोकपरीतात्मा शपते विलपन्निव ॥२३॥
हते पुत्रशते तस्मिन्[2] वसिष्ठो दुःखितस्तदा।
रक्षोभूतेन शापात्तु सुदासेनेति नः श्रुतं[3] ॥२४॥
कण्वश्चैव प्रगाथश्च घोरपुत्त्रौ बभूवतुः।
गुरुणा तावनुज्ञातावूषतुः सहितौ वने ॥२५॥
वसतोस्तु तयोस्तत्र कण्वपत्न्याः शिरःस्वपन्[4]।
ज्ञात्वा कनीयान् कण्वस्योरूत्सङ्गावन्वबुध्यत[5] ॥२६॥
शशुकामस्तु तं कण्वः क्रुद्धः पापाभिशङ्कया।
बोधयामास पादेन दिधक्षन्निव तेजसा ॥२७॥
विदित्वा तस्य तं भावं प्रगाथः प्राञ्जलिः स्थितः।
मातृत्वे च पितृत्वे च वरयामास तावुभौ ॥२८॥
स घौरो[6] वाथ कण्वो वा वंशजैर्बहुभिः पितुः।
ददर्शान्यैश्च सहितः ऋषिर्मण्डलमष्टमम् ॥२९॥

---

(१) अष्टम्यामिति क॰ ग॰ घ॰ च॰।
(२) क्रुद्धः इति ख॰ ङ॰ पुस्तकान्तरञ्च।
(३) तैः श्रुतिरिति क॰ ग॰ घ॰ च॰।
(४) शिरःश्रमादिति क॰ घ॰ च॰। शिरःस्वपदिति ख॰ ग॰।
(५) उत्सङ्गेनावबुध्यतेति क॰ घ॰ च॰। कण्वस्तूरूत्सङ्गेन त्ववबुध्यतेति ख॰ ङ॰ पुस्तकान्तरञ्च।
(६) घोरः इति क॰ ख॰ घ॰ च॰।

मांचिदेि[क]न्द्राणि चत्वारि श्वस्य सूर[ख]मित्यृचि।
तुष्टावाङ्गिरसी नारी वसन्ती[१] शश्वती[ग] पतिम् ॥४०॥
स्त्रियं सन्तं[२] पुमांसन्तमासङ्गः स्तुतवानृषिः[३]।
तस्य[४] दानं स्तुही[घ]त्यृग्भिश्चतुर्भिः परिकीर्त्तितम् ॥४१॥
शिक्षे[ङ]त्यृग्भ्यां तु काश्यस्य विभिन्दोः परिकीर्त्तितम्।
पाकस्थाम्नस्तु[५] भोजस्य चतुर्भिर्यमिति[च] स्तुतम् ॥४२॥
पौष्णौ प्रेति[छ] प्रगाथौ द्वौ[६] मन्यते शाकटायनः।
ऐन्द्रमेवाथ पूर्वन्तु गालवः पौष्णमुत्तरम्[७] ॥४३॥
ऐन्द्राणामिह सूक्तानामुत्तमस्योत्तमे तृचे।
दानं राज्ञः कुरुङ्गस्य सूरं राध[ज] इति स्तुतं ॥४४॥
दूरा[झ]दित्याश्विने सूक्ते सप्तत्रिंशत्तामे[ञ] यथा।

(१) वसन्ताविति ख॰। वसताविति ङ॰।
(२) त्यन्तमिति ग॰।
(३) मासं तं स्तुतवान्टषिरिति ङ॰ पुस्तकान्तरञ्च।
(४) तस्येति ख॰ ङ॰ पुस्तकान्तरञ्च।
(५) चेति ख॰ ङ॰।
(६) त्विति ख॰ ङ॰ पुस्तकान्तरञ्च।
(७) उत्तममिति ङ॰।

(क) ऋ॰ ८, १, १। (ख॰) ऋ॰ ८, १, ३४। (ग) ऋ॰ ८, १, ३४। (घ) ऋ॰ ८, १, ३०। (ङ) ऋ॰ ८, २, ४१। (च) ऋ॰ ८, ३, २१। (छ) ऋ॰ ८, ४, १५। (ज) ऋ॰ ८, ४, १९। (झ) ऋ॰ ८, ५, १। (ञ) ऋ॰ ८, ५, ३७।

तत्राद्धर्चा[१] दृच[२]स्त्वाग्य: कश्योर्दानस्तव: स्तत: ॥४५॥
महानिती[क]न्द्रदैवत्यमग्निं वैश्वानरं स्तुतम्[३]।
मन्यते शाकपूणिस्तु भार्य्याश्व[४]श्वैव मुद्गल: ॥४६॥
दृचे तु शत[ख]मित्यस्मिन् दानं तैरिन्दिरं स्तुतम्।
परन्तु मारुतं प्रेति[ग] श्रान[घ]स्त्वौष्णा[ङ]श्विनानि च[५] ॥४७॥
त्व[च]माग्नेयं य इन्द्रे[छ]ति षडैन्द्राण्युत्तमस्य तु।
उपोत्तमायामर्द्धर्चे देवो वास्तोस्पति:[ज] स्तुत: ॥४८॥
इद[झ]मादित्यदैवत्यं तिसृभिस्त्वदिति:[ञ] स्तुता[६]।
षष्ठ्यां चतुर्थीसप्तम्योरुते[ट]त्याश्विन्यृगष्टमी[७] ॥४९॥
स्तुता: श[ठ]मिति पङ्क्तौस्या[८]मग्निसूर्य्यानिलास्त्रय:।

---

(१) इत्यर्द्धर्च: इति ख० ङ० पुस्तकान्तरञ्च।
(२) दृच: इति क० घ० ङ० च०।
(३) महानैन्द्रं प्रत्नवत्यामग्निर्वैश्वानर: स्तुत: इति क० ग० घ० च०।
(४) भार्य्यश्च: इति ङ०।
(५) स्तत: इति ख० ङ० पुस्तकान्तरञ्च।
(६) तथेति क० ङ० पुस्तकान्तरञ्च।
(७) षष्ठ्या चतुर्थ्या सप्तम्योतेत्याश्विन्यृगष्टमीति क० घ० च०।
(८) पङ्क्तिस्विति क० ग० घ० च०।

---

(क) ऋ० ८, ६, १। (ख) ऋ० ८, ६, ४६। (ग) ऋ० ८, ७, १।
(घ) ऋ० ८, ८, १। (ङ) ऋ० ८, ८, २३। (च) ऋ० ८, ११, १।
(छ) ऋ० ८, १२, १। (ज) ऋ० ८, १७, १४। (झ) ऋ० ८, १८, १।
(ञ) ऋ० ८, १८, ६। (ट) ऋ० ८, १८, ८। (ठ) ऋ० ८, १८, ९।

वरुणार्य्यममित्राणां प्रगाथोऽय[१]मिति स्तुतिः[२] ॥५०॥
आग्नेये स्तुती राजर्षेस्त्वमद्‌ग्नोरदा[क]दिति।
पञ्चाशतं वधूनाञ्च गवां तिस्रश्च सप्ततीः ॥५१॥
अश्वोष्ट्राणामुरभ्राणां वासांसि विविधानि च।
रत्नानि वृषभं शावं तासामग्रेसरं पतिम्[३] ॥५२॥
हत्वा दारानृषिर्गच्छन्निन्द्रायेतच्छशंस ह।
वयं[ख] सूक्तेन शक्रश्च प्रीतस्तेन शचीपतिः ॥५३॥
ऋषे वरं वृणीष्वेति प्रक्तस्तमृषिरब्रवीत्।
काकुत्स्थ कन्याः पञ्चाशद्युगपद्रमये प्रभो ॥५४॥
कामतो बहुरूपत्वं यौवनं[४] चाचयां रतिं।
शङ्खनिधिं पद्मनिधिं मद्गृहेष्वनपायिनम्[५] ॥५५॥
प्रासादान् विश्वकर्म्मासौ सौवर्णांस्त्वत्प्रसादतः।
करोतु पुष्पवाटीश्च पृथक्तासां सुरद्रुमैः ॥५६॥
मा भूत् सपत्नी स्पर्द्धायां सर्व्वमस्त्विति चाब्रवीत्[६]।

---

(१) वरुणार्य्यममित्रास्तु प्रगाथेयमिति ख० ङ०।
(२) स्तुताः इति ख० ङ० पुस्तकान्तरञ्च, तदेति ग०।
(३) अग्रे शरं प्रतीति ख०।
(४) युगपदिति ङ०।
(५) काकुत्स्थेत्यादिसार्द्धश्लोकः पुस्तकान्तरे न दृश्यते।
(६) पञ्चाशतं वधूनाञ्चेत्यादि सर्व्वमस्त्विति चाब्रवीदित्यन्तपाठः क० ग० घ० च० चिह्नितपुस्तकेषु नेष्यते।

---

(क) ऋ० ८, १९, ३६। (ख) ऋ० ८, २१, १।

आगन्त[क] मारुतं सूक्तं वय[ख]मित्यैन्द्रमुत्तरम्[१] ॥५७॥
काण्वस्य सौभरे[२]श्चैव यजतो वंशजैः[३] सह ।
कुरुक्षेत्रे यवान् जगुर्हवींषि विविधानि च ॥५८॥
आरक्षु[४] सोऽभितुष्टाव इन्द्रश्चित्रं सरस्वतीं ।
इन्द्रो वे[ग]त्यनयर्चा स दानशक्तिं प्रकाशयन् ॥५९॥
आरक्षुराजोऽभिमानाच्च प्रहर्षितमनाः स्वयम्[५] ।
स स्तुतो[६] देववच्चित्र[घ] ऋषये तु गवां ददौ[७] ॥६०॥
अयुतानां सहस्रं वै निर्जयाह स्तुवन्नृषिः ।
ऋषिश्चोवाच[८] हृष्टात्मा नाहमर्हाम्यृषेः स्तुतिम् ॥६१॥
तिर्यग्योनौ समुत्पन्नो[९] देवतां[१०] स्तोतुमर्हसि ।

(१) वयमैन्द्रमतः परमिति ख० ङ० पुस्तकान्तरञ्च ।
(२) सोभरेरिति क० ग० घ० च० ।
(३) वसुजैरिति क० घ० च० ।
(४) आरक्षः इति ख० ङ० पुस्तकान्तरञ्च ।
(५) इन्द्रोवेत्यनयर्चा स इति श्लोकः क० ग० घ० च० चिह्नितपुस्तकेषु नालोक्यते ।
(६) संस्तुत इति ख० ग० ङ० पुस्तकान्तरञ्च ।
(७) गद्दी तद्दृत्तेन हेति ङ० पुस्तकान्तरञ्च ।
(८) प्रोवाचेति ङ० ।
(९) समुद्भूत इति ख० ङ० पुस्तकान्तरञ्च ।
(१०) देवं नः इति ग० ।

(क) ऋ० ८, २०, १ । (ख) ऋ० ८, २१, ४ । (ग) ऋ० ८, २१, १७ । (घ) ऋ० ८, २१, १८ ।

तंमन्वयां पुनस्तास्तौ दीत्यं(क) सूक्तेन चाश्विनौ(१) ॥६२॥
इति(ख) वेत्येतदाग्नेयं सखाय ऐन्द्रमुत्तरम्(२) ।
यथा वरः सुषाम्णे (ग)उत्तमस्तौ ष सस्तुषः ॥६३॥
अष्टौ तु सहिता एता देवता विभिदुर्बलम् ।
उषासेन्द्रश्च सोमश्चाथाग्निः सूर्यो बृहस्पतिः ॥६४॥
अङ्गिराः सरमा चैव ता वा(घ)मित्युत्तरस्य तु ।
आद्यौ मैत्रावरुण्यस्तु(३) नव द्वादश तूत्तराः ॥६५॥
वैश्वदेव्यो वरुराजा यथादावृषये वसु ।
इन्द्रो वेत्येतयर्चा तु दानप्रशिप्रकाशनम्(४) ॥६६॥
कीर्त्तितं(५) तु तृचे तस्मिन्नृच्य(ङ)मुषणायने ।
अश्विनौ ददतुः प्रीतौ तदिहोक्तं सुषामणि(६)(च) ॥६७॥

---

(१) स्तुत्वा चित्रं सूक्तैः परैस्त्रिभिरिति क० घ० च०।
(२) उत्तममिति ङ० एतच्छ्लोकार्द्धं क० घ० च० चिह्नितपुस्तकेषु न पठितम्। तेषु अस्मिन् स्थले, अश्विनावग्निमिन्द्रञ्च चाभितुष्टाव देवताः। एतच्छ्लोकार्द्धं वर्त्तते।
(३) मित्रावरुण्य इति ख० ङ०।
(४) एतच्छ्लोकार्द्धं ख० ग० ङ० चिह्नितपुस्तकेषु नापश्यत।
(५) कीर्त्तनमिति ङ० पुस्तकान्तरञ्च।
(६) एतच्छ्लोकार्द्धं क० ग० घ० च० चिह्नितपुस्तकेषु न विद्यते।

---

(क) ऋ० ८, २२, १। (ख) ऋ० ८, २३, १। (ग) ऋ० ८, २४, १८। (घ) ऋ० ८, २५, १। (ङ) ८, २५, २२। (च) ऋ० ८, २५, २२।

आश्विनं तु युवो[क] र्युक्ष्व[ख] वायव्या उत्तरास्तु याः।
यं सवर्णमनुर्नाम लेभे पुत्त्रं विवस्वतः ॥६८॥
वैश्वदेवानि पञ्चैतान्यग्निरुक्थे[ग] जगाद सः[१]।
बभ्रुरेक[घ] इति त्वस्मिँल्लिङ्गतो[२] द्विपदा दश ॥६९॥
स्तूयन्ते देवता ह्यासु कर्मभिः[३] स्वैः पृथक् पृथक्।
स्तुताः कर्मगुणैः स्वैः स्वैर्देवता यत्र यत्र तु ॥७०॥
पृथक् कर्मस्तुतिर्नाम वैश्वदेवन्तदेव तु[४]।
तासाम्बभ्रुरिति त्वाद्या सौम्याग्नेयी त्वगुत्तरा ॥७१॥
त्वाष्ट्री चैन्द्री च रौद्री च पौष्णी वैष्णव्यृगाश्विनी।
नवमी मैत्रावरुण्यृग्दशमी मित्रसंस्तवा ॥७२॥
यजमानप्रसङ्गाच्च यजिरेवात्र संस्तुता।
यो यजाति[ङ] इति शक्रो यजतां पतिरीलितः ॥७३॥
तस्य द्युमान्[च] इति यज्वा चतसृष्वपि मन्त्रि[छ]ति।

---

(१) वैश्वदेवानि सूक्तानि जगादाग्निरिति स्वयमिति क० घ० च०।
(२) त्वेता लिङ्गतः इति ख० ग० ङ० पुस्तकान्तरञ्च।
(३) ह्यासां नवभिरिति क० घ० च०।
(४) पृथक् कर्मस्तुतेर्युक्तं तद्विद्याद्वैश्वदेवतमिति ख० ङ० पुस्तकान्तरञ्च।

---

(क) ऋ० ८, २६, १। (ख) ऋ० ८, २६, २०। (ग) ऋ० ८, २७, १। (घ) ऋ० ८, २९, १। (ङ) ऋ० ८, ३१, १। (च) ऋ० ८, ३१, ३। (छ) ऋ० ८, ३१, १५।

यैज्वगौरेव दम्पत्योः पश्च या[क] दम्पतीत्युचः ॥७४॥
आग्नर्मा[ख]ग्नीरेतु[ग] पौष्णौ परे मित्रार्य्यमा यथा[घ] ।
वरुणस्य स्तुतस्त्वत्र आदित्या अग्नि[ङ]मग्नये[१] ॥७५॥
सूक्तानि प्रकृतानी[च]ति चौष्णेन्द्राणि पराण्यतः ।
अध[छ] इत्यत्र कन्या तं स्त्रीलिङ्गेनेन्द्रमब्रवीत् ॥७६॥
स हि तां कामयामास दानवीं पाकशासनः ।
ज्येष्ठां स्वसारं पुंसस्य[२] तस्यैव बधकाम्यया[३] ॥७७॥
अग्निने[ज]त्याश्विनं सूक्तमैन्द्रे सूक्ते परे ततः ।
ऐन्द्राग्न्यात् परमाग्नेयमैन्द्राग्न्याद्वारुणे[४] परे ॥७८॥
उत्तरे वरुणे त्वन्य आ वा[झ]मित्याश्विनस्तृचः ।
सूक्ते इमे[ञ] समाग्नेये[५] ताभ्यामैन्द्रे ततः परे[६] ॥७९॥

---

(१) यो यजाति हृचे याज्ञ इत्यादिसार्द्धश्लोकदयं क० ग० घ० च० चिह्नित-पुस्तकेषु नापद्यत ।

(२) प्युसस्येति क० घ० च०, व्यंसस्येति ख० पुस्तकान्तरञ्च ।

(३) युवकाम्ययेति ख० ग० ङ० पुस्तकान्तरञ्च ।

(४) ऐन्द्राग्नं परमाग्नेयमैन्द्राग्नं वारुणे इति क० घ० च० । वारुणे इत्यत्र वारुणमिति ग० ।

(५) इमे तु चाग्नेये इति क० घ० च० ।

(६) ताभ्य मैन्द्रेति चोत्तरे इति क० ग० घ० च० ।

---

(क) ऋ० ८, ३१, ५ । (ख) ऋ० ८, ३१, १० । (ग) ऋ० ८, ३१, ११ । (घ) ऋ० ८, ३१, १३ । (ङ) ऋ० ८, ३१, १४ । (च) ऋ० ८, ३२, १ । (छ) ऋ० ८, ३३, १९ । (ज) ऋ० ८, ३५, १ । (झ) ऋ० ८, ४२, ४ । (ञ) ऋ० ८, ४३, १ ।

वशायाख्याय(१)यत्(२)प्राद्रात्कानीनस्तु पृथुश्रवाः ।
तदृच संस्तुतं दानमाह(क) इत्येवमादिभिः(३) ॥८०॥
प्रागः(ख) प्रगाथो वायव्यः सूक्तस्योपोत्तमा च या ।
मित्रार्य्यमाणौ मरुतः सुनीथोथ(ग)दृचे स्तुताः ॥८१॥
द्विपञ्चारिंशकात्प्रीत(४) स्त्रिशोकाय पुरन्दरः ।
गिरिं निकृत्य वज्रेण गा ददावसुरैर्हृताः ॥८२॥
यः(घ) कन्नदिति चैतस्यामृषिस्तु स्वयमब्रवीत्(५) ।
स्तुता नवम्या त्वदितिर्मही(ङ)त्यादित्यदेवते(६) ॥८३॥
अन्याः पञ्चोषसेऽपि स्युः सौम्यं स्वादो(च)रिति स्मृतम् ।
पराण्यष्टौ तु(७) सूक्तानि ऋषीणां तिग्मतेजसाम् ॥८४॥

---

(१) वशायाख्यायेति घ० ।

(२) वशाश्वाय यददिति ङ० ।

(३) आदिनेति ख० ङ० पुस्तकान्तरञ्च ।

(४) प्रातः इति ङ० पुस्तकान्तरञ्च ।

(५) मित्रार्य्यमाणौ मरुतः इत्यादि ऋषिस्तु स्वयमब्रवीदित्यन्तपाठः क० ग० घ० च० चिह्नितपुस्तकेषु नेष्यते ।

(६) चापीति क० घ० च० ।

(७) पराणि चाष्टाविति ख० ङ० पुस्तकान्तरञ्च ।

---

(क) ऋ० ८, ४६, २१ । (ख) ऋ० ८, ४६, २५ । (ग) ऋ० ८, ४६, ४ । (घ) ऋ० ८, ४६, २७ । (ङ) ऋ० ८, ४७, १ । (च) ऋ० ८, ४८, १ ।

ऐन्द्राग्न्यभि[क] तु षड्विंशः प्रगाथो बहुदैवतः।
स्तुगन्त्याग्नेरयेत्य[ख]ग्निः सूर्य्यमन्त्यपदा[१] जगौ[२] ॥८५॥
प्रस्कण्वस्य पृषध्रस्य[३] प्रादाद्यदसु किञ्चन।
तद्भूरी[ग]दिति सूक्ताभ्यामखिलन्त्विह संस्तुतम्[४] ॥८६॥
ऐन्द्राग्न्युभय[घ]मित्यृच षडाग्नेयात् पराणि तु[५]।
निपातमाह[६] देवानां दाता म[ङ] इति भागुरिः ॥८७॥
तृचे[७]यास्कस्तृचन्त्वेतं[८] मन्यते वैश्वदेवतं।
आदित्यदैवतं सूक्तं त्याग्न्वि[च]त्यृच परन्तु यत् ॥८८॥
धीवराः सहसा मीनान् दृष्ट्वा सारस्वते जले।

(१) अन्त्यं पदमिति ङ० पुस्तकान्तरञ्च।
(२) एतच्छ्लोकार्द्धं क० ग० घ० च० चिह्नितपुस्तकेषु न दृश्यते। तेषु अस्मिन् स्थले, अन्वेत्यग्निरिति तस्यास्ततोऽग्निः सूर्य्य एव तु। इति श्लोकार्द्धमस्ति।
(३) त्विति ङ०।
(४) परिकीर्त्तितमिति ख० ङ० पुस्तकान्तरञ्च।
(५) श्लोकार्द्धमेतत् ख० ङ० चिह्नितपुस्तकयोर्न विद्यते।
(६) निपातानाहेति ख०, निपातेनेहेति ङ० पुस्तकान्तरञ्च।
(७) तृचमिति ग०।
(८) यास्कोऽस्मेऽर्द्धं तृचं चैनमिति ङ०।

(क) ऋ० ८, ४८, १। (ख) ऋ० ८, ५६, ५। (ग) ऋ० ८, ५५, १। (घ) ऋ० ८, ६१, १। (ङ) ऋ० ८, ६५, १०। (च) ऋ० ८, ६७, १।

आलं प्रक्षिप्य तान् बद्धोदक्षिपन् सलिलात् स्थलम् ॥८९॥
शरीरपातभीतास्ते तुष्टुवुश्चादितेः सुतान्।
मुमुचुस्तांस्ततस्ते च प्रसन्नास्तान् समूदिरे ॥९०॥
धीवराः क्षुद्वयं मा वो भूत्स्वर्गं प्राप्स्यथेति च[1]।
उते[क]ति माता चैवैषां तृचेनाभिष्टुतादितिः ॥९१॥
मातृत्वाद्गर्भसम्बन्धात्[2] स्तूयेतैषां[3] स्तुतौ स्तुतौ।
ऐन्द्राण्या वा रथं[ख] त्रीणि स्तौत्यृतूनुपमे[ग]ति षट् ॥९२॥
आर्चाश्वमेधयोरत्र पश्वदानस्तुतिः परा।
अपा[घ]दिन्द्रस्य चाग्नेश्च विश्वेषां चैव संस्तवः ॥९३॥
तृचस्य प्रथमोऽर्द्धर्चः शेषा वरुणदेवताः[4]।
त्व[ङ]माग्नेयेऽथ वा सूक्ते उत्तरे[5] हविषां स्तुतिः॥९४॥
पयःपश्वोषधीनाञ्च[6] तथा रूपं हि दृश्यते।

(१) धीवराः सहसा मीनानित्यादि सार्द्धश्लोकद्वयं क० ग० घ० च० चिह्नितपुस्तकेषु नापश्यत।
(२) मातृत्वादतिसम्बन्धादिति क० च०, मातृत्वादभिसम्बन्धादिति ग० मातृत्वादिति सम्बन्धादिति घ०।
(३) भुवन्त्येनामिति ख० ङ० पुस्तकान्तरञ्च।
(४) शेषां वरुणदेवतः इति ख० ग० ङ०।
(५) सूक्तमुत्तरमिति क० ग० घ० च०।
(६) चेति ख० ङ०।

(क) ऋ० ८, ६७. १०। (ख) ऋ० ८, ६८, १। (ग) ऋ० ८, ६८, १४। (घ) ऋ० ८, ६९, ११। (ङ) ऋ० ८, ७१, १।

उ(क)दित्यांश्विनमाग्नेये परे सूक्ते विप्रो विप्रः(ख) ॥९५॥
ऋग्भ्यामह(ग)मिति द्वाभ्यां स्तौत्यात्मानमृषिः स्वयम् ।
आत्मानमात्मना स्तुत्वा स्तौति दानं श्रुतर्व्वणः ॥९६॥
आत्मादानाभिसम्बन्धात् परुष्णीञ्च महानदीम्[१] ।
परुष्णीं परया चेन्द्रं[२] त्रिभिः सूक्तैरिम(घ)न्विति ॥९७॥
सौम्यस्य त्वय(ङ)मित्यस्य पराण्यैन्द्राणि यानि तु ।
नही(च)ति तेषां प्रथमे[३] वैश्वदेव्यृगवीवृधत्(छ) ॥९८॥
देवाना(ज)मिति देवानाम्प्रेष्ठ(झ)माग्नेयमुत्तरम्[४] ।
त्रीण्याश्विनानि सूक्तानि आ मे(ञ) ऐन्द्राणि तं(ट) तथा[५] ॥९९॥
अपालाऽत्रिसुता त्वासीत्कन्या त्वग्दोषिणी पुरा ।
तामिन्द्रश्चकमे दृष्ट्वा[६] विजने पितुराश्रमे ॥१००॥

(१) आत्मानमात्मना स्तुत्वेत्यादि परुष्णीञ्च महानदीमित्यन्तपाठः क० ग० घ० च० चिह्नितपुस्तकेषु न पठितः ।
(२) परया परुष्णीमिन्द्रमिति क० ग० घ० च० ।
(३) प्रथममिति ङ० पुस्तकान्तरञ्च ।
(४) आग्नेयन्तु ततः परमिति क० घ० च० ।
(५) आम इति ऐन्द्राणि तमितीति चेति क० ग० घ० च० ।
(६) दृष्ट्वेति क० घ० च० ।

(क) ऋ० ८, ७३, १ । (ख) ऋ० ८, ७४, १ । (ग) ऋ० ८, ७४, १३ । (घ) ऋ० ८, ७६, १ । (ङ) ऋ० ८, ७९, १ । (च) ऋ० ८, ८०, १ । (छ) ऋ० ८, ८०, १० । (ज) ऋ० ८, ८३, १ । (झ) ऋ० ८, ८४, १ । (ञ) ऋ० ८, ८५, १ । (ट) ऋ० ८, ८८, १ ।

तपसा बुबुधे सा तु सर्व्वमिन्द्रचिकीर्षितम्।
उदकुम्भं समादाय अपामर्थं जगाम सा[1] ॥१०१॥
दृष्ट्वा सोममपादास्ये तुष्टावर्चा वने तु तं।
कन्या वा[क]रिति चैतस्यामेषोऽर्थः कथितः स्तुतः[2] ॥१०२॥
सा सुषाव मुखात् सोमं स्तुत्वेन्द्रञ्चाजुहाव तं[3]।
असौ य एषी[ख]त्यनया पपाविन्द्रस्तु तन्मुखात्[4] ॥१०३॥
अपूपांश्चैव सक्तूंश्च भक्षयित्वा तु तद्गृहात्[5]।
ऋग्भिस्तुष्टाव सा चैनं जगादैनं तृचेन तु[6] ॥१०४॥
सुलोमामनवद्याङ्गीं कुरु मां शक्र सुत्वचां।
तस्यास्तद्वचनं श्रुत्वा प्रीतस्तेन पुरन्दरः[7] ॥१०५॥
रथच्छिद्रेण तामिन्द्रः शकटस्य युगस्य च।

---

(१) क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु उदकुम्भं समादायेति श्लोकार्द्धं, अपूपांश्चैव सक्तूंश्चेति श्लोकार्द्धात्परतः पठितम्।
(२) दृष्ट्वासोममपादास्ये इत्यादि एषोऽर्थः कथितः स्तुतः इत्यन्तपाठः क॰ ग॰ घ॰ च॰ चिह्नितपुस्तके नोपलभ्यते।
(३) पपाविन्द्रस्तु तन्मुखादिति क॰ ग॰ घ॰ च॰।
(४) एतच्छ्लोकार्द्धं क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु न विद्यते।
(५) शतक्रतुरिति ख॰ ङ॰ पुस्तकान्तरञ्च।
(६) असौ ब्रूते तृचेन सेति ङ॰ पुस्तकान्तरञ्च।
(७) एतच्छ्लोकार्द्धं क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु नेष्यते।

---

(क) ऋ॰ ८, ९१, १। (ख) ऋ॰ ८, ९१, २।

प्रचिण्य निश्चकर्ष त्वचः सुत्वक् सा तु ततोऽभवत्[१] ॥१०६॥
तस्यां त्वचि व्यपेतायां पूर्व्वस्यां श्लल्कोऽ[२]भवत्।
उत्तरा त्वभवद्गोधा इककलामस्त्वगुत्तमा ॥१०७॥
इतिहासमिमं[३] सूक्तं त्वाहतुर्यास्कमाठरौ[४]।
कन्ये[क]ति शौनकः सूक्ते पान्त[ख]मैन्द्रे ततः परे[५] ॥१०८॥
उत्तमा चार्भवी प्रोक्ता उत्तरस्यैतरेयके।
छान्दोगिके तृतीये तदार्भवं शस्यते यतः[६] ॥१०९॥
मारुतं गौः[ग] परं सूक्तमा त्वै[घ]न्द्राणि[७] पराणि षट्।
सूक्ते द्वितीय एतेषामितिहासं प्रचक्षते[८] ॥११०॥

(१) ततः सा सुत्वचाभवदिति ङ० पुस्तकान्तरञ्च।

(२) तस्यास्त्वगपहृतायाः पूर्व्वा सा शल्यकः इति क० ग० घ० च०।

(३) इदमिति क० ग० घ० च०।

(४) यास्कभागुरिरिति क० ग० घ० च० यास्कगालवाविति ङ० पुस्तकान्तरञ्च।

(५) शौनकस्त्वैन्द्रं यान्तमित्युत्तरे च ये इति क०।

(६) उत्तमा चार्भवीत्यादिश्लोकः क० ग० घ० च० चिह्नितपुस्तकेषु नोपलभ्यते।

(७) ह्यात्वैन्द्राणीति क० ग० घ० च०।

(८) एतच्छ्लोकार्द्धं क० ग० घ० च० चिह्नितपुस्तकेषु नेष्यते।

(क) ऋ० ८, ९१, १। (ख) ऋ० ८, ९२, १। (ग) ऋ० ८, ९४, १। (घ) ऋ० ८, ९५, १।

अपक्रम्य तु[1] देवेभ्यः सोमो वृत्रभयार्दितः।
नदीमंशुमतीनाम्नीमभ्यतिष्ठत् कुरून्[2] प्रति ॥११११॥
तं बृहस्पतिनैकेन अभ्यपा[3]द्वृत्रहा सह।
योत्स्यमानः सुसंहृष्टे[4]र्मरुद्भिर्विविधायुधैः ॥११२॥
दृष्ट्वा तानायतः सोमः स्वबलेन व्यवस्थितः।
मन्वानो वृत्रमायान्तं[5] जिघांसुमरिसेनया ॥११३॥
व्यवस्थितं धनुष्मन्तं तमुवाच बृहस्पतिः।
मरुत्पतिरयं सोम एहि[6] देवान्[7] पुनर्विभो ॥११४॥
श्रुत्वा देवगुरोर्वाक्यमनर्थं वृत्रशङ्कया[8]।
सोऽब्रवीन्नेति तं शक्र ओजसैव[9] बलाद्बली ॥११५॥

---

(१) अपचक्रामेति ख० ङ० पुस्तकान्तरञ्च।

(२) अंशुमतीं नामा अत्यतिष्ठद्गुरूनिति क० ग० घ० च०, अभ्यति-ष्ठत् कुरूनिति ख० ङ०।

(३) अभ्ययादिति पाठः साधुः। दृषान्वयादिति ङ० पुस्तकान्तरञ्च।

(४) योत्स्यमानञ्च संहृष्टैरिति क० घ० च०।

(५) दृष्ट्वा तानायतांत्सोमं स्वबलेन व्यवस्थितम्। मन्वानं पुत्रमायान्त-मिति क० घ० च०।

(६) मरुत्पतिरयं सोममैहीति क० ग० घ० च०।

(७ देवेति पाठः समीचीनः।

(८) श्लोकार्द्धमेतत् क० ग० ध० च० चिह्नितपुस्तकेषु न विद्यते।

(९) स्वर्ग एवेति क० घ० च०।

इयाय देवानायन्तं[१] तं पपुर्विधिवत्सुराः।
जघ्नुः पीत्वा च दैत्यानां समरे[२] नवतीर्नव ॥११६॥
तदेतदप्यवद्रप्स[३](क)स्तृचे सर्व्वं निगद्यते।
तृचस्य देवतां तस्य[४] इन्द्रमेवाह शौनकः ॥११७॥
ऐन्द्राबार्हस्पत्य उक्ता ब्राह्मणे त्वैतरेयके[५]।
तृचेनेन्द्रमपश्यन् तं [६]नेमोऽय(ख)मिति भार्गवः ॥११८॥
तुष्टावेन्द्रो तृचेनाय(ग)मस्मं पश्य च मामृषे।
स हि स्तुवन्नेव एको नेन्द्रा[७] अस्तीति चाब्रवीत् ॥११९॥
तदाकर्ण्येन्द्र आत्मानमृग्भ्यां तुष्टाव दर्शयन्[८]।

---

(१) आदायेति क० ग० घ० च०।
(२) इतरा इति क० घ० च०।
(३) तदेतदपि यतस्मिन्निति क० ग० च०।
(४) देवता ह्येता इति ख० ग० ङ० पुस्तकान्तरञ्च।
(५) श्लोकार्द्धमेतत् क० ग० घ० च० चिह्नितपुस्तकेषु न दृश्यते।
(६) अदृश्यन्तमिति क० घ० च०, ऐन्द्रमपश्यन् तमिति ङ० पुस्तकान्तरञ्च।
(७) इन्द्रः इति पाठः साधुः।
(८) स हि स्तुवन्नेव एक इत्यादि ऋग्भ्यां तुष्टाव दर्शयन्नित्यन्तपाठः क० ग० घ० च० चिह्नितपुस्तकेषु न पठितः।

---

(क) ऋ० ८, ९६, १३। (ख) ऋ० ८, १००, १। (ग) ऋ० ८, १००, ४।

ऋषिस्तु दृष्ट्वा[१] सुप्रीतो विश्वेत्तात[क] इति द्वृचे ॥१२०॥
विविधानि च कर्म्माणि दानमैन्द्रश्च शंसति।
मनोजवा[ख]स्तु सौपर्णी[२] समुद्रे[ग] वज्रसंस्तवः ॥१२१॥
वाचं सर्व्वगतां देवीं[घ] स्तौति यद्वा[ङ]गिति द्वृचे।
त्रींल्लोकानभितप्येमान्[३] वृत्रस्तस्थौ स्वयं त्विषा ॥१२२॥
तं नाशकं हन्तुमिन्द्रो विष्णुमभ्येत्य सोऽब्रवीत्।
वृत्रं हनिष्ये तिष्ठस्व विक्रम्याद्य[४] ममान्तिके ॥१२३॥
उद्यतस्य तु[५] वज्रस्य द्यौर्ददातु[६] ममान्तरम्।
तथेति विष्णुस्तच्चक्रे द्यौश्चास्य विवरन्ददौ ॥१२४॥
तदेतदखिलं प्रोक्तं विष्णविति सखे[च]त्यृचि[७]।

---

(१) तं दृष्ट्वर्षिश्चेति ख० ङ० पुस्तकान्तरञ्च।
(२) सौवर्णीति ख० ङ०।
(३) अभितप्येमानिति ख० ङ० पुस्तकान्तरञ्च।
(४) वृत्रं हनावविक्रम्य तिष्ठस्वाद्येति ख० ङ० पुस्तकान्तरञ्च।
(५) उद्यतस्यैवेति क० घ० च०।
(६) दद्गात्विति क० घ० च०।
(७) सर्व्वमृषिणोक्तं सखेत्यृचीति क० ग० घ० च०।

---

(क) ऋ० ८,१००,६। (ख) ऋ० ८,१००,८। (ग) ऋ० ८,१००,९। (घ) ऋ० ८,१००,११। (ङ) ऋ ८,१००,१०। (च) ऋ० ८,१००,१२।

मैत्रावरुण्यः सूक्ताद्यास्ततस्त्वृध[क]गित्यृचः ॥१२५॥
प्रे[ख]ति मित्राय वा पादाश्चार्य्यम्णो[१] वरुणस्य च।
नय[ग]स्तुर्यः सर्वेषामादित्यानामिति स्तुतिः ॥१२६॥
परा त्वादित्यदेवत्या[२] आम[घ] इत्याश्विनो द्वृचः[३]।
वायव्ये चोत्तरे सौर्य्ये औषसी त्वृगियं[ङ] परा[४] ॥१२७॥
पावमानी प्रजा हे[च]ति माते[छ]त्यृग्भ्यान्तु गौः स्तुता।
त्वमग्ने वृह[ज]दाग्नेये परेऽग्निस्त्वृचि संस्तुतः ॥१२८॥
मरुद्भिः सह रुद्रैश्च आग्ने याही[झ]ति मध्यमः।
प्रजा हे[ञ]त्यपि वार्द्धर्चे प्रथमेऽग्निरिहोच्यते ॥१२९॥
पादे तृतीये आदित्य स्तुरीये मध्यमः स्तुतः।

---

(१) मित्राय पादस्य अर्य्यम्णः इति क० ख० ग० घ०।
(२) ऋच आदित्यदेवत्या इति ङ० पुस्तकान्तरञ्च।
(३) द्व्यृचः इति ग०।
(४) सौर्य्य औषस्या प्रभां वा चन्द्रसूर्य्ययोरिति ख० ङ० पुस्तकान्तरञ्च।
औषस्या इत्यत्र उषसेति ग०।

---

(क) ऋ० ८, १०१, १। (ख) ऋ० ८, १०१, ५। (ग) ऋ० ८, १०१, ४। (घ) ऋ० ८, १०१, ७। (ङ) ऋ० ८, १०१, १३। (च) ऋ० ८, १०१, १४। (छ) ऋ० ८, १०१, १५। (ज) ऋ० ८, १०२, १। (झ) ऋ० ८, १०२, १४। (ञ) ऋ० ८, १०२, १४।

रहस्ये ब्राह्मणेऽप्येवं व्याख्यातं ह्यैतरेयके[१] ॥१२०॥
पावमानः स्तुतः सोमो नवमे त्विह मण्डले[२] ।
पवमानवदाप्यस्तु[३] समिद्ध[क] इति संस्तुतः ॥१२१॥
अग्न आयूंषी[ख]ति चासु तिसृष्वग्निर्निपातभाक् ।
अविता न[ग] इति त्वस्मिंस्तृचे पूष्णा[४] सह स्तुतः ॥१२२॥
आग्नेय्यौ द्वे ऋचावत्र यत्ते[घ] इत्युत्तरे ततः ।
उभाभ्या[ङ]मिति सावित्री अग्निसावित्र्य[५]गुत्तरा ॥१२३॥
पुनन्तु मां[च] वैश्वदेवी आग्नेयी त्वृगुपप्रियम्[छ] ।
षडुत्तरा[६] य[ज] इत्यत्र[७] स्वाध्यायाध्येतृसंस्तवः ॥१२४॥

(१) प्रजा ह्येत्यपि वाऽद्धर्चं इत्यादिसार्द्धश्लोकः क० ग० घ० च० चिह्नित-पुस्तकेषु न विद्यते ।
(२) नवमे मण्डलेऽर्षिभिरिति क० घ० च०, मण्डलर्षिभिरिति ग० ।
(३) पवमानवदाप्रीयः इति ख० ।
(४) पूषेति ख० ङ० पुस्तकान्तरञ्च ।
(५) आग्न्यासावित्रीति ख० ।
(६) सप्तोत्तराः इति ख० ङ० पुस्तकान्तरञ्च ।
(७) उत्तरं च य इत्येतीति ग० ।

(क) ऋ० ६, ५, १ । (ख) ऋ० ६, ६६, १६ । (ग) ऋ० ६,६७,२० ।
(घ) ऋ० ६, ६७, २३ । (ङ) ऋ० ६, ६७, २५ । (च) ऋ० ६, ६७, २७ ।
(छ) ऋ० ६, ६७, २६ । (ज) ऋ० ६, ६७, ३१ ।

सूक्ते निरुक्ते स्वक्तेऽ[क]ऽग्नि रक्षोहा धर्म्मसंस्तवः[१]।
सूर्य्यवत्त्वात्मवत्त्वाच्च[२] पवित्र[ख]मिति चोच्यते ॥१२५॥
आर्भवस्तु भवेत्पाद ऋभुर्धीर[ग] इति स्मृतः।
निपातैस्तु त्रिभिः पादैस्त्रयो देवा इहोदिताः[३] ॥१२६॥
ब्रह्मा देवानां तिस्रोऽक्षास्त्रिभिस्त्वेतैर्द्दृचैर्ऋचैः[४]।
सूर्य्यवत्त्वात्मवत्त्वाच्च[५] स्तूयते सोम[घ] इत्यपि[६] ॥१२७॥
अनावृष्ट्यां तु वर्त्तन्त्यां पप्रच्छर्षीञ्छचीपतिः।
काले दुर्गे महत्यस्मिन् कर्म्मणा न जीवथ ॥१२८॥
शकटं शाकिनी गावः कृषिरस्यन्दनं वनं[७]।
समुद्रः पर्व्वतो राजा एवं जीवामहे वयम् ॥१२९॥
अथ स्तुवन्[८] शशंसास्य हृषिराङ्गिरसः शिशुः।

(१) एतच्छ्लोकार्द्धं ङ० चिह्नितपुस्तके न पठितम्।
(२) सूर्य्यवर्चात्मवर्चापीति क० घ० च०।
(३) एष श्लोकः क० ग० घ० च० चिह्नितपुस्तकेषु नेष्यते।
(४) दृचादृचैरिति क० ग० घ० च०।
(५) सूर्य्यवर्चात्मवर्चापीति क० घ० च०।
(६) एव वेति क० ग० घ० च०।
(७) क्षरस्य नन्दनन्दनमिति ख०। एष श्लोकः क० ग० घ० च० चिह्नितपुस्तकेषु नापश्यत।
(८) स्तुवन्नेवेति क० ग० घ० च०।

(क) ऋ० ९, ७३, १। (ख) ऋ० ९, ८३, १। (ग) ऋ० ९, ८७, ३। (घ) ऋ० ९, १०७, ७।

नानानीयेन[क] सूक्तेन ऋषीणामेव[१] सन्निधौ ॥१४०॥
तानिन्द्रः प्राब्रवीत् सर्व्वां[२]स्तपध्वं सुमहत्तपः ।
नातप्ततपसः शक्यमिदं[३] कृत्स्नं व्यपोहितुं ॥१४१॥
अथ ते वै तपस्तेपुः सर्व्वे स्वर्गजिगीषवः ।
ततस्ते तपसोग्रेण पावमानीर्ऋचोऽब्रुवन् ॥१४२॥
अनसूयुरधीयानः शुश्रूषुस्तपसान्वितः ।
दश पूर्व्वापरान् वंश्यान् पुनात्यात्मानमेव च ॥१४३॥
पापं यच्चा[४]करोत्किञ्चिन्मनोवाग्देहभोजनैः[५] ।
पूतः स तस्मात् सर्व्वस्मात् स्वाध्यायफलमश्नुते[६] ॥१४४॥
पावमान्यः परं ब्रह्म शुक्रं ज्योतिः सनातनं[७] ।
गायत्र्योऽन्तेऽत्र यस्यासां प्राणानायम्य तन्मनाः[८] ॥१४५॥
पावमानं पितॄन् देवान् ध्यायेद्यश्च सरस्वतीम् ।

---

(१) इवेति ख० ङ० पुस्तकान्तरञ्च ।
(२) त्वाह सर्व्वांस्त्विति क० ग० घ० च० ।
(३) न ह्येतत्तपसा शक्यं विनेति क० ग० घ० च० ।
(४) यथेति ख० ङ० पुस्तकान्तरञ्च ।
(५) मनोवाग्देहदो जनैरिति क० घ० च०, मनोवाग्देहतो जनैरिति ग० ।
(६) ऋषिसालोक्यमाप्नुयादिति ख० ङ० पुस्तकान्तरञ्च ।
(७) ज्योतिस्सनातनमिति क० घ० च० ।
(८) एष श्लोकः ख० ङ० पुस्तकयोर्न विद्यते ।

---

(क) ऋ० ९, ११२, १ ।

पितृंस्तस्योपवर्तेत[1] क्षीरं सर्पिर्मधूदकम् ॥१४६॥
एतत् सूक्तं शतं सौम्यं मण्डलं सचतुर्दशम् ।
पावमान[2]मिति ख्यातमनुवाकास्तु सप्त वै[3] ॥१४७॥
सप्ताग्नेयानि सूक्तानि ददर्शाद्य इति त्रितः ।
प्रकेतुने[क]ति त्वाष्ट्रस्तु त्रिशिराः सूक्तमुत्तरम् ॥१४८॥
त्वचस्तस्य[4] षडाग्नेय्यस्तृचस्तस्ये[ख]ति[5] यः परः ।
तेनेन्द्रमभितुष्टाव त्वष्टान्त इति नः[6] श्रुतिः ॥१४९॥
अभवत्स हि[7] देवानां पुरोधाः प्रियकाम्यया[8] ।
असुराणां स्वसुः पुत्रस्त्रिशिरा विश्वरूपभृत् ॥१५०॥
तमृषिं प्रहित[9]न्त्विन्द्रो देवेषु बुबुधेऽसुरैः ।

---

(१) उपतिष्ठेतेति ङ० पुस्तकान्तरञ्च ।
(२) वीजमात्रमिति ख० ।
(३) एष श्लोकः क० ग० घ० च० चिह्नितपुस्तकेषु न दृश्यते ।
(४) तस्येति ङ० ।
(५) त्वचस्यास्येतीति ङ० ।
(६) न श्रुतिरिति क० घ० च०, श्रुतमिति ङ०, पुस्तकान्तरञ्च । एष श्लोकः ख० चिह्नितपुस्तके न पठितः ।
(७) स ह्येति ख० ङ० ।
(८) त्वयकाम्ययेति ख० ङ० पुस्तकान्तरञ्च ।
(९) तं स्त्रजन् प्रहितः इति क० घ० च० । महित इति ग० ।

---

(क) ऋ० १०, ८, १ । (ख) ऋ० १०, ८, ७ ।

सोऽस्य वज्रेण तान्याशु[१] शिरांसि त्रीण्यचिच्छिदत्[२] ॥१५१॥
तस्य यत्सोमपानन्तु मुखं सोऽभूत् कपिञ्जलः ।
कलविङ्कः सुरापानमन्नादं तित्तिरि[३]स्त्वभूत् ॥१५२॥
तं वागभ्यवदद्ब्राह्मी[४] ब्रह्महासि शतक्रतो ।
प्रपन्नं हतवान् यस्माद्[५] विश्वरूपं पराङ्मुखम् ॥१५३॥
तमभ्यषिञ्चत् सूक्तेन ऋषि[६]राप(क) इति स्वयम् ।
सिन्धुद्वीपोपनुत्यर्थं तस्याश्लीलस्य पाप्मनः ॥१५४॥
मैथुनार्थमभीप्सन्तीं प्रत्याचष्टे यमीं यमः ।
ओचित् सखायं(ख)[७] संवादो[८] विवस्वत्सु तयोस्तयोः॥१५५॥
वृषा(ग)ग्नेये हविर्धाने युजे वा(घ)मत्र[९] संस्तुते ।
परेयिवांस(ङ)मित्यत्र स्तूयते मध्यमो यमः[१०] ॥१५६॥

---

(१) सोऽस्य वज्रेण तस्याशु इति क० घ० च० ।
(२) तान्याशु शिरांसि त्रीण्ययाच्छिददिति ग०। शिरांस्येवाच्छिदत् प्रभुः इति ख० पुस्तकान्तरञ्च ।
(३) तित्तिरः इति ख० ङ० पुस्तकान्तरञ्च ।
(४) तीव्रेति क० घ० च० ।
(५) यत्त्वमिति क० घ० च० ।
(६) ह्यृषिरिति क० ग० घ० च० ।
(७) सखोचिदितीति क० ग० घ० च० ।
(८) संवादे इति क० घ० च० ।
(९) युजत्येतेनेति क० ग० घ० च० ।
(१०) इत्येतस्मिन् स्तूयन्ते यमस्तयः इति क० घ० च० ।

---

(क) ऋ० १०, ९, १ । (ख) ऋ० १०, १०, १ । (ग) ऋ० १०,११, १ ।
(घ) ऋ० १०,१३,१ । (ङ) ऋ० १०, १४, १ ।

अथर्वाणोऽथ भृगवः पितरोऽङ्गिरस[क]श्च ह।
षष्ठ्यां देवगणास्तत्र संस्तूयन्ते शुभक्रयः ॥१५७॥
पितृभिश्चाङ्गिरोभिश्च संस्तुतो दृश्यते यमः।
मन्त्रेषु बहुशः पादे विवस्वन्तं पिता हि सः ॥१५८॥
संस्कार्य्यप्रेतसंयुक्तैः पितृभिः स्तूयते यमः।
प्रेहि प्रेही[ख]ति तिसृषु प्रेताग्निष उदाहृताः ॥१५९॥
पितॄणां हि पति र्देवो यमस्तस्मात् स सूक्तभाक्[१]।
अतिद्रव[ग]हचे श्वानौ परं पित्र्यमुदीरितम्[२] ॥१६०॥
परेणैव[३] तु सूक्तेन श्मशाने कर्म्म शंसति[४]।
पितृदेवासुराणाञ्च अभवन्नग्नयस्त्रयः ॥१६१॥
हव्यकव्यवहौ चोभौ सह रक्षाग्निना सह[५]।
तत्र मैन[घ]मिति त्वेतत्कव्यवाहनसंस्तुतिः[६] ॥१६२॥

---

(१) अथर्वाणोऽथ भृगवः इत्यादिसार्द्धश्लोकत्रयं क० ग० घ० च० चिह्नितपुस्तकेषु नोपलभ्यते।
(२) उदीरतामिति क० ग० घ० च०।
(३) उत्तरेणेति ग०।
(४) एतच्छ्लोकार्द्धं ख० ङ० चिह्नितपुस्तकयोर्न पठितम्।
(५) सहरक्षा च नामयः इति ख० ङ० पुस्तकान्तरञ्च।
(६) त्वाह कव्यवाहनमेवचेति ख० ङ० पुस्तकान्तरञ्च।

---

(क) ऋ० १०, १४, ६। (ख) ऋ० १०,१४, ७। (ग) ऋ० १०, १४, १०।
(घ) ऋ० १०, १६, १।

इतराणि तु देवस्य[१] स्तुतिर्नाम्नाऽसुरस्य च[२]।
अभवन्मिथुनं त्वष्टुः सरण्यूस्त्रिशिराः सह[३] ॥१६३॥
स वै सरण्यूं प्रायच्छत् स्वयमेव विवस्वते।
ततः सरण्व्यां[४] जज्ञाते यमयम्यौ विवस्वतः।
तौ चाप्युभौ यमावेव ज्यायांस्ताभ्यान्तु वै यमः ॥१६४॥

इति बृहद्देवतायां षष्ठोऽध्यायः ॥६॥

---

(१) देवस्येति ग०, दैत्यस्येति ङ०।
(२) त्विति ख० ङ० पुस्तकान्तरञ्च।
(३) सदृशी च हेति क० घ० च०।
(४) सरण्या इति ख० ङ० पुस्तकान्तरञ्च।

# अथ सप्तमोऽध्यायः ।

दृष्ट्वा[१] भर्त्तुः परोक्षन्तु सरण्यूः सदृशीं स्त्रियम् ।
निक्षिप्य मिथुनं[२] तस्यामश्वा भूत्वापचक्रमे[३] ॥ १ ॥
अविज्ञानाद्विवस्वांस्तु तस्यामजनयन्मनुम् ।
राजर्षिरभवत् सोऽपि[४] विवस्वानिव तेजसा ॥ २ ॥
स विज्ञाय[५] त्वपक्रान्तां सरण्यूमश्वरूपिणीम् ।
त्वाष्ट्रीं प्रति जगामाशु वाजी भूत्वाश्वलक्षणः[६] ॥ ३ ॥
सरण्यूश्च[७] विवस्वन्तं विदित्वा[८] हयरूपिणम्[९] ।

---

(१) दृष्टेति क० घ० च० ।
(२) मैथुनमिति पाठः साधुः ।
(३) अश्वो भूत्वोपचक्रमे इति क० घ० च० ।
(४) राजर्षिरासीत् स मनुरिति ख० ङ० पुस्तकान्तरञ्च ।
(५) विज्ञाप्येति ग० ।
(६) सलक्षणः इति क० घ० च०, स्वलक्षणः इति ग० ।
(७) तमिति ख० ङ० पुस्तकान्तरञ्च ।
(८) विज्ञायेति ख० ङ० पुस्तकान्तरञ्च ।
(९) हरिरूपिणमिति पुस्तकान्तरम् ।

मैथुनायोपचक्राम[1] तांश्च तत्राहरोह सः ॥४॥
ततस्तयोस्तु वेगेन शुक्रं तदपतद्भुवि।
उपाजिघ्रच्च[2] सा त्वश्वा तच्छुक्रं गर्भकाम्यया ॥५॥
आघ्रातमात्राच्छुक्रात्तु कुमारौ संबभूवतुः।
नासत्यश्चैव दस्रश्च यौ सुतावश्विनाविति[3] ॥६॥
इतिहासमिमं यास्कः सरण्यूदेवते त्वृचे[4]।
विवस्वतश्च त्वष्टुश्च त्वष्टे[क]ति सह मन्यते ॥७॥
पूषे[ख]ति पादौ पौष्णौ द्वौ त्वाग्नेया[5]वुत्तरौ तु यौ।
स्यात्तृतीयोऽपि वा पौष्णस्तिस्रश्चान्याः परास्तु याः[6] ॥८॥
अपां स्तुतिस्तृगन्त्वैका[7] त्वचात्मारस्वतात्परा।
स्तुतः परोक्षः सोमस्तु द्रप्स[ग] इत्युत्तरे तृचे ॥९॥
अब्देवताशीर्वादो[8] वा पयस्वत्यु[घ]त्तरा तु या।

(१) मिथुनायापचक्रामेति ख० ङ० पुस्तकान्तरञ्च।
(२) उपजिघ्रतीति क० घ० च०।
(३) यौ तु तौ वाजिनावितीति क० घ० च०।
(४) ऋचाविति क० ध० च०, तृचे इति ङ० पुस्तकान्तरञ्च।
(५) द्वावाग्नेयाविति ङ० पुस्तकान्तरञ्च।
(६) पौष्णस्त्वस्यापरस्तृच इति ख० ङ० पुस्तकान्तरञ्च।
(७) अपां स्तुति स्तुतिस्त्वेकेति ख०, अपां स्तुतिस्तुतत्वेकेति ङ० पुस्तकान्तरञ्च।
(८) अब्देवत्याशीर्वादः इति ख० ङ०, पुस्तकान्तरञ्च।

(क) ऋ० १०, १७, १। (ख) ऋ० १०, १७, ३। (ग) ऋ० १०, १७, ११।
(घ) ऋ० १०, १७, १४।

पतत्सत्ताः स्मुतिर्म्रत्यो(क)रन्ते क्रियासु(१) कर्मणि ॥१०॥
मृतम्निष्टेभ्य आम्रास्ते इमे(ख) ज्योग्जीवनं पुनः।
इमं जीवेभ्य(ग) आम्रास्ते तेभ्यः परिधिकर्मणि(२) ॥११॥
यथा(घ) धात्र्युत्तरा लाङ्गी ततो यान्या इमा(ङ)स्त्विति(३)।
स्त्रीणामाम्निषमाम्रास्ते तथैवाञ्जनकर्मणि(४) ॥१२॥
उदीर्ष्व नारीत्यनया मृत(च)पत्नी तु रोहती(५)।
भ्राता कनीयान् प्रेतस्य निगदात्(६) प्रतिषेधति ॥१३॥
कुर्य्यादेतत् कर्म्म होता देवरो न भवेद्यदि।
प्रेतानुगमनं न स्यादिति ब्राह्मणशासनात् ॥१४॥
वर्णानामितरेषाञ्च स्त्रीधर्म्मोऽयं भवेन्न वा(७)।
शाम्यर्थं धनुरादाने प्रेतस्यैवं धनु(छ)र्जपेत्(८) ॥१५॥

(१) त्विति ङ०।
(२) एष स्लोकः क० ग० घ० च० चिह्नितपुस्तकेषु न दृश्यते।
(३) यथधात्र्युत्तरक्षाङ्गी ततो यान्या इमात्त्वितीति ख० ङ० पुस्तकान्तरञ्च।
(४) तथा परिधिकर्म्मणीति क० ग० घ० च०।
(५) मृतं पत्न्यनुरोहतीति पाठः साधुः। मृतमन्वारोहतीति क० घ० च०।
(६) निगतेति क० घ० च०, निगत्वेति ग०।
(७) कुर्य्यादेतत् कर्म्म होतेति सार्द्धैकस्रोकः क० ग० घ० च० चिह्नितपुस्तकेषु नापद्यत।
(८) शान्त्यर्थं च जपत्यस्यां, धनुरित्युत्तरामृचमिति क० ग० घ० च०।

(क) ऋ० १०, १८, २। (ख) ऋ० १०, १८, ३। (ग) ऋ० १०, १८, ४।
(घ) ऋ० १०, १८, ५। (ङ) ऋ० १०, १८, ७। (च) ऋ० १०, १८, ८।
(छ) ऋ० १०, १८, ९।

यस्मादेताः प्रयुज्यन्ते श्मशाने चान्त्यकर्म्मणि[१]।
तस्माददेत्तृचस्या[२]स्य देवतां मृत्युरेव[३] तु ॥१६॥
मन्त्रेषु ह्यनिरुक्तेषु देवतां कर्म्मतो वदेत्।
मन्त्रतः कर्म्मतश्चैव प्रजापतिरसम्भवे[४] ॥१७॥
परास्त्वतस्रो यास्त्वत्र उपसर्प[क]ति पार्थिवी।
तासां प्रयोगः प्रेतस्य अस्थिसञ्चयकर्म्मणि ॥१८॥
प्रतीचीने[ख]यथाहानि अपश्चत्येतराणि तु[५]।
अहःसु[६] पितरो दद्युरित्याशास्ते[७]ऽन्यथाशिषः[८] ॥१९॥
अहःस्वागामिषु च मां द्रयतः[९] समजीवयन्[१०]।
निवर्त्तध्व[ग]मिदं सूक्तं[११] गवां केचिदपां विदुः ॥२०॥
अर्द्धर्चः प्रथमायास्तु[१२] अग्नीषोमीय उत्तरः।

---

(१) एते प्रयुज्यन्ते श्मशानेष्वन्तकर्म्मस्विति क० ग० घ० च०।
(२) दृचस्येति क० ग० घ० च०।
(३) मृत्युमेवेति पाठः समीचीनः।
(४) इदं जगाविति क० घ० च०।
(५) प्रतीचीनमृचं त्वेतामपश्चज्योत्तरासु तत् इति ख० ङ० पुस्तकान्तरञ्च।
(६) अहस्त्विति ख० ङ० पुस्तकान्तरञ्च।
(७) दध्युरभ्याशास्ते इति क० घ० च०।
(८) दद्युरभ्याशास्ते समाशिषः इति ग०।
(९) प्रददतः इति ख०।
(१०) एतच्छ्लोकार्द्धं क० ग० घ० च० चिह्नितपुस्तकेषु नोपलभ्यते।
(११) इतीदन्त्विति क० ग० घ० च०।
(१२) चेति ख० ङ० पुस्तकान्तरञ्च।

---

(क) ऋ० १०, १८, १० । (ख) ऋ० १०, १८, १४ ॥ (ग) ऋ० १०, १९, १ ।

ऐन्द्री षष्ठी द्वितीयायामुभौ देवौ निपातितौ ॥२१॥
दृश्याचरन्तु प्राग्यर्थं मानसं सूक्तमुत्तरम्[(१)]।
चौण्येन्द्राणि कुह्य[(क)]त्यत्र आग्नेयाभ्यां पराणि तु ॥२२॥
वृषोऽचास्त्वाश्विन[(२)]स्त्वेक ऐन्द्राग्न[(३)] उत्तमे युवम्[(ख)]।
भद्रं[(ग)] सौम्यं प्रहि[(घ)]पौष्णं चौण्येन्द्राणि पराण्यतः ॥२३॥
तेषामाद्येन मत्तः सन्[(४)] स्वानि कर्म्माणि शंसति।
यथा चरति भूतेषु यथा वर्षति पाति[(५)] च ॥२४॥
सूक्ते तदस्मिन्नष्टाभिर्ऋग्भि[(६)]रूक्षमभू[(ङ)]रिति[(७)]।
सप्ते[(च)]ति मरुतः स्तौति पर्ज्जन्यं स्तौत्यृ[(८)]गुत्तरा ॥२५॥
अग्निमिन्द्रश्च सोमश्च पीवानं मेष[(छ)]मर्चति।
पूर्व्वोऽर्द्धर्चोऽपर[(९)]स्तस्याः पर्ज्जन्यं वायुना सह ॥२६॥

(१) उच्यते इति क० ग० घ० च०।
(२) वृषोऽस्यास्त्वाश्विन इति ङ०।
(३) ऐन्द्राग्नामिति क० ग० घ० च०।
(४) स इति क० घ० च०।
(५) वातीति ख० ङ० पुस्तकान्तरञ्च।
(६) तदस्मिन्नर्द्धर्चे त्वृग्भिरिति क० ग० घ० च०।
(७) अभूर्व्वितीति क० च०, प्रभूर्व्वितीति ग०।
(८) परमं स्तौति स्तौति वच्यमिति क० घ० च०।
(९) पूर्व्वोऽर्द्धर्चोपरः इति क० ग० घ० च०।

(क) ऋ० १०, २२, १। (ख) ऋ० १०, २४, ६। (ग) ऋ० १०, २५, १।
(घ) ऋ० १०, २६, १। (ङ) ऋ० १०, २७, १। (च) ऋ० १०, २७, १५।
(छ) ऋ० १०, २७, १७।

विक्रोशनास[क] इत्यग्निमुत्तरा सूर्य्यमर्च्चति[१]।
एतौ मे[ख]ऽयं य[ग] इत्येते स्तुतिश्चैवेन्द्रवज्रयोः[२] ॥२७॥
वृक्षे वृक्षे[घ] धनुश्चैन्द्रं[३] देवाना[ङ]मिति तु त्रयः।
शीतोष्णवर्षदातारः पर्जन्यानिलभास्कराः ॥२८॥
अन्त्ये सूर्य्यानिलौ चोभौ स्तूयेते च पदे[४] सह।
सा ते जीवातु[च]रित्यस्यामिन्द्रो वा सूर्य्य एव वा ॥२९॥
विश्वो ह्यी[छ]त्यत्र[५] संवाद[६] स्नुषेः शक्रस्य चैव हि।
युग्मा एत्र तु शक्रस्य अयुग्मा एव तु स्नुषेः[७] ॥३०॥
स्नुषेन्द्रस्यागतान् देवान् दृष्ट्वा शक्रमनागतम्।
यज्ञे परोक्षवत् प्राह श्वशुरो नागतो मम ॥३१॥
यद्यागच्छेद्भक्षयेत् स[ज] धानाः सोमं पिबेदपि।
इति तस्या वचः श्रुत्वा तत्क्षणादैत्यवज्रधृक् ॥३२॥
तिष्ठन् वेद्यामुत्तरस्यामुच्चैराह सरोरुवत्[८]।

---

(१) एवत्विति क० ग० घ० च०।
(२) एता उभौ स्तेताविति स्तूयेते वक्षमुत्तरेति क० घ० च०।
(३) ऐन्द्रीति क० घ० च०, ऐन्द्रीमिति ग०।
(४) पदे संस्तूयते इति ख० ङ० पुस्तकान्तरञ्च।
(५) ह्यन्यस्त्विति क० ग० घ० च०।
(६) संवादमिति ख० ङ०।
(७) युग्माः शक्रस्य विज्ञेया वसुक्रस्येतरा ऋचः इति ख० ङ० पुस्तकान्तरञ्च।
(८) स्नुषेन्द्रस्यागतान् देवानित्यादिसार्द्धश्लोकद्वयं क० ग० घ० च० चिह्नितपुस्तकेषु न दृश्यते।

---

(क) ऋ० १०,२७,१८। (ख) ऋ० १०,२७,२०। (ग) ऋ० १०,२७,२१।
(घ) ऋ० १०,२७,२२। (ङ) ऋ० १०,२७,२३। (च) ऋ० १०,२७,२४।
(छ) ऋ० १०, २८, १। (ज) ऋ० १०, २८, २।

तृतीयया चतुर्थ्या च प्रदेवत्रे[क]त्यपां स्तुतिः[१] ॥२३॥
अपां नपा[ख]दित्यनेन नाम्नाग्नि[२]र्मध्यमः स्तुतः।
प्रति य[ग]द्वैश्वदेवन्त[३] त्तस्य प्रे[घ]त्यैन्द्रमुत्तरम्[४] ॥२४॥
वैश्वदेवी प्रमे[ङ]त्येका सं मे[च]त्यैन्द्रो[५]द्वृचः[६] परः॥
कुत्स अवण[छ]मर्षन्ति[७] परे द्वे[८] चासदस्यवम् ॥२५॥
मृते मित्रातिथौ राज्ञि तं नपातमृषिः परैः।
उपमश्रवसं यस्य[ज] चतुर्भिः स व्यशोकयत् ॥२६॥
प्रावेपा[झ] इति सूक्तं यत्तदक्षस्तुति[९]रुच्यते।
अक्षा[१०]श्चान् द्वादशी स्तौति नवम्याद्या च[११] सप्तमी ॥२७॥

(१) प्रदेवत्रेत्यपां स्तुताविति ख॰ ग॰ ङ॰ पुस्तकान्तरञ्च।
(२) नामाग्निरिति क॰ घ॰ च॰।
(३) त्विति क॰ ग॰ घ॰ च॰।
(४) उत्तममिति ख॰ ङ॰ पुस्तकान्तरञ्च।
(५) तस्यास्त्वैन्द्रः इति क॰ घ॰ च॰।
(६) द्वृचः इति ग॰।
(७) अर्षन्तः इति ख॰ ङ॰ पुस्तकान्तरञ्च।
(८) पराः षडिति क॰ घ॰ च॰।
(९) तच्चास्येति क॰ घ॰ च॰।
(१०) तत्रेति ख॰ ङ॰।
(११) अथेति ख॰ ङ॰ पुस्तकान्तरञ्च।

(क) ऋ॰ १०, ३०, १। (ख) ऋ॰ १०, ३०, ४। (ग) ऋ॰ १०, ३०, १२।
(घ) ऋ॰ १०, ३२, १। (ङ) ऋ॰ १०, ३३, १। (च) ऋ॰ १०, ३३, २।
(छ) ऋ॰ १०, ३३, ४। (ज) ऋ॰ १०, ३३, ६। (झ) ऋ॰ १०, ३४, १।

यथोदग्नी ऋषिं स्तौति कितवश्चानुशासति[१]।
ऋचां[२]स्तु शेषामिन्दन्ति अबुध्रं[क] वैश्वदेवते[३] ॥३८॥
सावित्रमेके मन्यन्ते महः अग्ने[ख] स्तवं परम्।
आचार्य्याः शौनको यास्को गालवश्चोत्तमामृचम्[४] ॥३९॥
नमः[ग] सौर्य्यमैन्द्रमस्मिन्[घ] सौर्य्ये षष्ठ्या तु याः स्तुताः[५]।
निपातिनी[६]स्ताः सूक्तान्ते वैश्वदेवो[७]ऽत्र तु तृचः[८] ॥४०॥
आश्विनानि तु य[ङ]स्त्रीणि ऐन्द्राण्यस्ते वसु[च] प्र च।
ऐन्द्राणामुत्तमा यास्तु स्तुतोऽर्द्धर्चे[९] बृहस्पतिः[छ] ॥४१॥
परे दिवः पर्य्या[ज]ग्नेये प्रथमस्योत्तमा तु या[१०]।

(१) एतच्छ्लोकार्द्धं ख० ङ० चिह्नितपुस्तकयोर्न विद्यते।
(२) ऋचाः इति ङ०।
(३) वैश्वदेवतमिति पाठः साधुः।
(४) एष श्लोकः क० ग० घ० च० चिह्नितपुस्तकेषु न पठितः।
(५) षष्ठ्यां तु संस्तुतः इति ख० ङ० पुस्तकान्तरञ्च।
(६) निपातिन इति ख० ङ०।
(७) सूक्तान्त्यो वैश्यदेव्यः इति क० ग० घ० च०।
(८) तृचः इति ग०।
(९) यास्तु अर्द्धर्चे त्विति क० ग० घ० च०, याः स्युस्ततोऽर्द्धर्चे इति ङ०।
(१०) उत्तमेन त्विति ख० ङ० पुस्तकान्तरञ्च।

(क) ऋ० १०, ३५, १। (ख) ऋ० १०, ३६, १२। (ग) ऋ० १०,३७,१।
(घ) ऋ० १०, ३८, १। (ङ) ऋ० १०, ३९, १। (च) ऋ० १०, ४२, १।
(छ) ऋ० १०, ४२, ११। १०,४३, ११। १०, ४४, ११। (ज) ऋ० १०, ४५, १।

द्यावापृथिव्यौ विश्वे च पथ्या[1] दुर्वेन संस्तुताः ॥ ४२ ॥
आसीत् काचीवती घोषा पापरोगेण दुर्भगा ।
उवास षष्टिवर्षाणि पितुरेव गृहे पुरा ॥ ४३ ॥
आतस्थे महती चिन्ता न पुत्रौ न पतिर्मम ।
जरां प्राप्ता मुधा तस्मात् प्रपद्येऽहं शुभस्पती ॥ ४४ ॥
यथैतौ मामकस्तात आराध्यावाप यौवनम् ।
आयुरारोग्यमैश्वर्यं सर्व्वभूतहने विषम्[2] ॥ ४५ ॥
रूपवत्त्वाच्च सौभाग्यमहं तस्य सुता यदि ।
ममापि मन्त्राः प्रादुःस्युर्यैः स्तोष्येते मयाश्विनौ ॥ ४६ ॥
चिन्तयन्तीति सूक्तानि त्रीणि घोषा ददर्श सा ।
स्तुतौ तावश्विनौ देवौ प्रीतौ तस्या भगान्तरम् ॥ ४७ ॥
प्रविश्य विजरारोगां सुभगाञ्चक्रतुश्च तौ ।
भर्त्तारं ददतुस्तस्यै सुहस्त्यञ्च सुतं मुनिम्[3] ॥ ४८ ॥
ददतुस्तौ सुपर्णाभ्यां यन्नासत्येति[4] कीर्त्तिते ।
काचीवत्यै च घोषायै तथा ददतुरोजसा[5] ॥ ४९ ॥

---

(१) पथ्यौ इति ख० ग० ङ० ।
(२) सर्व्वभूतवते धियमिति ङ० ।
(३) मनोरिति ङ० ।
(४) येनासत्येतीति ख० ।
(५) न तस्यां मानुरोमयेति ख० ङ० पुस्तकान्तरञ्च । आसीत् काची-वती घोषेत्यादि सप्त श्लोकाः क० ग० घ० च० चिह्नितपुस्तकेषु न सन्ति ।

प्राजापत्यासुरी त्वासीद्विकुण्ठा नाम नामतः।
सेच्छतीन्द्रसमं पुत्रं तेपेऽथ सुमहत्तपः ॥५०॥
सा प्रजापतितः कामान्(१) लेभेऽथ विविधान् वरान्(२)।
तस्यास्त्विन्द्रः स्वयं(३) जज्ञे जिघांसुर्दैत्यदानवान् ॥५१॥
एकदा(४) दानवैः सार्द्धं समरे समसज्जत।
जघान तेषां नवतीर्नव सप्त च सप्तधा(५) ॥५२॥
भित्त्वा(६) स्वबाहुवीर्येण हैमरौप्यायसीः(७) पुरीः।
हत्वा सर्व्वान् यथास्थानं पृथिव्यादिष्ववस्थितान्(८) ॥५३॥
राज्यं प्राप स दैत्येषु स्वेन वीर्य्येण दर्पितः।
देवान् बाधितुमारेभे मोहितोऽसुरमायया ॥५४॥
बध्यमानास्तु तेनापि असुरेणामितौजसा।
उपाधावन्नृषिश्रेष्ठं तत्प्रबोधाय सप्तगुम्(९) ॥५५॥

---

(१) काममिति क० घ० च०।
(२) सुमहत्तपाः इति क० ग० घ० च०।
(३) सुतः इति ख० ङ० पुस्तकान्तरयोः।
(४) एकस्त्वेति क० घ० च०।
(५) सप्तकानिति ख० ङ० पुस्तकान्तरयोः।
(६) जित्वेति ख० ङ० पुस्तकान्तरयोः।
(७) हैमवत्यायसीरिति क० घ० च०।
(८) एतच्छ्लोकार्द्धं क० घ० च० चिह्नितपुस्तकेषु न पठितम्।
(९) राज्यं प्राप स दैत्येष्वित्यादिश्लोकद्वयं क० ग० घ० च० चिह्नित-पुस्तकेषु नापठ्यत।

पृथिव्यां कालकेयांश्च पौलोमांश्चैव धन्विनः।
तांश्च व्युच्छादयामास[1] प्रह्लादतनयानपि[2] ॥५६॥
ऋषिस्तु सप्तगुर्नाम तस्यासीत्सुप्रियः सखा।
स चैनमभितुष्टाव जग्टभ्मे[क]ति करे स्पृशन् ॥५७॥
ततः स[3] बुद्धा चात्मानं सप्तगुस्तुतिहर्षितः।
आत्मानमेव तुष्टाव अहं[4] भुव[ख]मिति त्रिभिः ॥५८॥
कीर्तयन् स्वानि कर्माणि यानि स्म कृतवान् पुरा।
यथाकरोत् स[5] वैदेहं व्यंसं सोमपतिं[6] नृपम् ॥५९॥
वसिष्ठशापादभवद्विदेहो[7] नृपतिः पुरा।
इन्द्रप्रसादादीजे स[8] सचैः[9] सारस्वतादिभिः ॥६०॥
प्रभूतां शक्तिमन्तांश्च शत्रूणामपरिक्रियाम्[10]।

---

(१) व्युच्छादयन् सर्व्वानिति ख॰ ङ॰ पुस्तकान्तरञ्च।
(२) इत्येति क॰ ग॰ घ॰ च॰।
(३) त्रिति ख॰ ङ॰ पुस्तकान्तरञ्च।
(४) चाहमिति ख॰ ङ॰ पुस्तकान्तरञ्च।
(५) चेति क॰ ग॰ घ॰ च॰।
(६) व्यसं सोमपतिरिति क॰ ग॰ च॰, सौमपतिमिति ङ॰।
(७) वैदेह इति ग॰।
(८) चेति क॰ ग॰ घ॰ च॰।
(९) मन्त्रैरिति पुस्तकान्तरम्।
(१०) एतच्छ्लोकार्द्धं क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु नेष्यते।

---

(क) ऋ॰ १०, ४७, १। (ख) ऋ॰ १०, ४८, १।

विष्णुलोकेषु[१] चैश्वर्य्यं प्रभुत्वं भुवनेषु च ॥६१॥

प्र वो मह[क] इति त्वस्यामात्मन्ये[२] वार्पयन् स्वयम्[३]।

वैश्वानरे गृहपतौ यविष्ठेऽग्नौ च पावके ॥६२॥

वषट्कारेण वृक्णेषु अग्नौ च[४] सहसः सुतौ[५]।

अपचक्राम देवेभ्यः मौचीकोऽग्नि[६]रिति श्रुतिः ॥६३॥

स प्राविशदपक्रम्य स्वृतूनपो वनस्पतीन्।

ततोऽसुराः प्रादुरासन्नष्टेऽग्नौ हव्यवाहने ॥६४॥

तेऽग्निमेवान्वैचन्त देवा हत्वासुरान् युधि।

तन्नु दूराद्यमश्चैव वरुणश्चान्वपश्यताम् ॥६५॥

उभावेनं समादाय देवानेवाभिजग्मतुः।

दृष्ट्वा देवास्तेनमूचुरग्ने हव्यानि नो वह ॥६६॥

वरं गृहाण मत्तस्त्व चित्रभानो भजस्व नः[७]।

प्रत्युवाचाथ तानग्निर्विश्वे देवा यदात्थ माम्[८] ॥६७॥

तत्करिष्ये जुषतान्नु हौत्रं[९] पञ्च जना मम।

---

(१) त्वषु सर्व्वेष्विति क० ग० घ० च०।

(२) आत्मनः इति क० ग० घ० च०।

(३) वीर्य्यमत्ययमिति ग०।

(४) त्विति ङ० पुस्तकान्तरञ्च।

(५) भ्रातृवर्गौ सह स्तुताविति ख० ग०, सहसस्तुते इति ङ०।

(६) अभिचक्राम सौचिको भयादग्निरिति क० ग० घ० च०।

(७) चेति क० घ० च०।

(८) वैश्वानराय दातुं मेति क० घ० च०, विश्वे ब्रूत यथाक्रमादिति ग०।

(९) होत्रमिति ख० ग० ङ० पुस्तकान्तरञ्च।

---

(क) ऋ० १०, ५०, १।

ग्रांल्यमुख्यः[१] प्रणीतश्च पुत्रो गृहपतेश्च यः ॥६८॥
उत्तरो दक्षिणश्चाग्निरेते पञ्च जनाः स्मृताः।
मनुष्याः पितरो देवा गन्धर्व्वोरगराक्षसाः ॥६९॥
यास्कौपमन्यवा[२]वेतानाहतुः पञ्च वै जनान्।
निषादपञ्चमान् वर्णान् मन्यते शाकटायनः ॥७०॥
ऋत्विजो[३] यजमानश्च शाकपूणिस्तु मन्यते।
[४]आयुरस्तु च मे दीर्घं हवींषि विविधानि च ॥७१॥
अरिष्टिः पूर्व्वजानाञ्च भ्रातृणामध्वरेऽध्वरे[५]।
प्रयाजा[क]श्चानुयाजाश्च घृतं सोमे पयः[६] पशुः ॥७२॥

(१) ग्रामामुख्यः इति ग०।

(२) यास्कौपमन्यवाविति क० घ० च०।

(३) ऋत्विजेति ख०।

(४) ख० चिह्नितपुस्तके आयुरस्तु च मे दीर्घमिति श्लोकार्द्धात्प्राक्,—

होताध्वर्युश्च उद्गाता ब्राह्मणं तान् वदाति तान्।
चक्षुः श्रोत्रं मनो वाक् च प्राणश्चेत्यात्मवादिनः ॥
गन्धर्व्वाप्सरसो देवा मनुष्याः पितरस्तथा।
सर्पाश्च ब्राह्मणाश्चैव श्रूयन्ते होतरेयके ॥
ये चान्ये पृथिवीजाता देवाश्चान्येऽथ यज्ञिणो।

इत्यधिकं पठितम्।

(५) भ्रातृणामेवमध्वरे इति ख०।

(६) च यः इति ख० ग०।

(क) ऋ० १०, ५१, ८।

मद्देवत्यानि[१] वै मन्तु यज्ञो मद्देवतोऽस्तु च[२] ।
तवाग्ने यज्ञ (क)इत्येतत् प्रत्यर्द्धि[३] स्विष्टकृच्च सः[४] ॥७३॥
तस्य[५] त्रीणि सहस्राणि नव त्रीणि (ख)शतानि च ।
त्रिंशच्चैव तु देवानां सर्व्वानेव[६] वरान् ददुः ॥७४॥
ततोऽग्निः सुमनाः प्रीतो विश्वैर्देवैः पुरस्कृतः ।
विधूयाङ्गानि यज्ञेषु चक्रे होत्र[७]मतन्द्रितः ॥७५॥
भ्रातृभिः सहितः प्रीतो दिव्यात्मा हव्यवाहनः ।
तस्यास्थि देवदार्व्वासीन्मेदोमांसञ्च गुग्गुलुः ॥७६॥
सुगन्धि तेजनं स्नायुः[८] शुक्रं रजतकाञ्चने ।
रोमाणि काशाः[९] केशाश्च कुशाः कूर्म्मा नखानि च ॥७७॥
अन्त्राणि शैवलास्त्वेव मज्जा सिकतशर्कराः[१०] ।

(१) मे देवत्यानीति ख०, मद्देवत्यान्निति ग०, मद्देवत्यानीति क० घ० च० ।
(२) न्टचः इति ग० ।
(३) प्रत्यार्द्धीति ग० ।
(४) एतच्छ्लोकार्द्धं क० घ० च० चिह्नितपुस्तकेषु न विद्यते ।
(५) यस्येति क० ग० घ० ङ० च० ।
(६) सर्व्वाण्येतानिति ख० ।
(७) होत्रमिति ग० ।
(८) सुचिति क० घ० च०, सुगन्धं तजनत् प्राप्नुरिति ख० ।
(९) कोशाविति क० घ० च० ।
(१०) शिकतशर्कराः इति ख०, सिकतशार्कराः इति ग० ।

(क) ऋ० १०, ५१, ८ । (ख) ऋ० १०, ५२, ६ ।

असृक्पित्तञ्च विविधं धातवो गैरिकादयः ॥७८॥
एवमग्निश्च देवाश्च सूक्तैर्मह[क]दिति त्रिभिः।
समूदिरे[ख] परे तस्मादैन्द्रे सूक्ते तु तां स्तुते ॥७९॥
त्रिधुन्द्राण[ग]मित्यस्यां सूर्य्याचन्द्रमसौ स्तुतौ।
प्राणवच्चात्मवच्चापि स्तुतिरप्यत्र दृश्यते[1] ॥८०॥
इदं [घ]द्वे वैश्वदेवे च द्वितीयेऽर्य्यमणो हृचः[2]।
प्रथमैन्द्री द्वितीयाग्नेय्यन्त्या तत्सोमदेवता[3] ॥८१॥
[4]जीवावृत्तिः सबन्धो[5]र्वा यदि वा मनसः स्तवः।
राजासमातिरैक्ष्वाको[6] रथप्रोष्ठः[7] पुरोहितान् ॥८२॥

(१) एष श्लोकः क० ग० घ० च० चिह्नितपुस्तकेषु न पठितः।
(२) गिरिसां स्तुतिरिति ख०, हृचः इति ग०।
(३) प्रथमा त्वैन्द्राग्नैन्द्राग्नी त्वार्त्विज्यामपरन्तु यदिति क० घ० च०।
(४) ख० चिह्नितपुस्तके जीवावृत्तिरिति श्लोकात् प्राक्—
अपि स्तौति पितृनेतदार्त्विज्यञ्च षड्दृचम्।
सूक्तमाख्यानसंयुक्तं पञ्चकासम्य मे पुरा॥
सम्मोहान्नष्टसंज्ञस्य प्राचूणां दभिहृत्स्य तु।
इति सार्द्धकश्लोकोऽधिकं पठितः।
(५) सुबन्धोरिति पाठः साधुः परन्त तथादर्शनात्।
(६) ऐक्ष्वाकुरिति क० घ० च०।
(७) रथप्रोष्ठाः इति ख०, रथप्रोष्ठानिति ग०।

(क) ऋ० १०, ५१, १। (ख) ऋ० १०, ५४, १। (ग) ऋ० १०, ५५, ५।
(घ) १०, ५६, १।

बुद्स्य बन्धुप्रभृतीन् द्वैपादा ये त्रिमण्डले।
द्वौ किराताकुली[१] नाम ततो मायाविनौ द्विजौ ॥८३॥
असमातिः पुरोऽधत्त वरिष्ठौ तौ हि मन्यते।
तौ कपोतौ द्विजौ भूत्वा गत्वा गौपायनान[२]भि ॥८४॥
मायाबलाच्च योगाच्च सुबन्धुमभिपेततुः।
स दुःखादभिघाताच्च मुमोह च पपात च ॥८५॥
तौ ततोऽस्यासुमालुच्य[३] राजानमभिजग्मतुः।
ततः सुबन्धौ पतिते गतासौ भ्रातरस्त्रयः ॥८६॥
जेपुः स्वस्त्ययनं सर्व्वे मे[क]ति गौपायनाः[४] सह।
मन[ख]श्चावर्तयन्तोऽस्य[५] सूक्तं य[ग]दिति तेऽभ्ययुः ॥८७॥
जेपुश्च भेषजार्थं यं प्रतारी[घ]ति परन्ततः।
सूक्तस्याद्यम्तृचस्त्वत्र[६] निर्ऋतेरपनोदनः ॥८८॥

(१) किरातौ कुली इति ग०। कुली इति क० घ० ङ० च०।
(२) गोपायनानिति घ०।
(३) आलुप्येति ख० आलोच्येति ग० ङ०।
(४) गोपायनाः इति ख० ग०।
(५) चावर्त्तनं तस्येति ख०।
(६) तत्रेति ख० ग०।

(क) ऋ० १०, ५७, १। (ख) ऋ० १०, ५७, ३। (ग) ऋ० १०,५८, १।
(घ) ऋ० १०, ५९, १।

चंयः पादा सो खि[क]ति तु सौम्या नैर्ऋत उत्तमः ।
ऋक् सौम्या नैर्ऋती[1] चैषा असुनीते[ख]स्तुतिः परा ॥८९॥
द्वृचे[2] त्वानुमतं पादमन्त्यं यास्कस्तु मन्यते ।
भूद्यौः सोमस्य पूषा च खं पथ्या स्वस्तिरेव च ॥९०॥
सुबन्धोरेव प्राप्त्यर्थं पुनर्न[ग] इति तु स्तुता[3] ।
तृचः श[घ]मिति रोदसीरैन्द्रोऽर्द्धर्चः स[ङ]मित्यृचि ॥९१॥
रपसो नाशनार्थं वै तुष्टुवुस्त्वथ रोदसी ।
रप [च]इत्यभिधानन्तु गदितं पापकृच्छ्रयोः ॥९२॥
ऋग्भिरे[छ]ति चतसृभिस्तत ऐक्ष्वाकुमस्तुवन् ।
इन्द्रक्षत्रे[ज]त्यृचा चास्य स्तुत्वाग्रमिषुराग्निषः[4] ॥९३॥
अगस्त्यस्ये[झ]ति माता च तेषां तुष्टाव तं नृपम् ।
स्तुतः स राजा सव्रीड़स्तस्थौ गौपायनानभि ॥९४॥

(१) निर्ऋतीति ख० ग० ।
(२) ऋचीति ग० ।
(३) संस्तुतः इति ख० ।
(४) एतच्छ्लोकार्द्धं ख० चिह्नितपुस्तके नेष्यते ।

---

(क) ऋ० १०, ५९, ४ । (ख) ऋ० १०, ५९, ५ । (ग) ऋ० १०, ५९, ७ । (घ) ऋ० १०, ५९, ८ । (ङ) ऋ० १०, ५९, १० । (च) ऋ० १०, ५९, १० । (छ) ऋ० १०, ६०, १ । (ज) ऋ० १०, ६० ५ । (झ) ऋ० १०, ६०, ६ ।

सूक्तेनाथ स्तुव[१]न्नग्निं द्वैपदेन यथाविषु[२] ।
अग्निरित्यब्रवीदेता[३]नयमन्तः परैत्वसून्[४] ॥९५॥
सुबन्धुरस्य चैक्ष्वाको[५]मया गुप्तो हितार्थिना ।
सुबन्धवे प्रदायासून् [६]जीवेत्युक्त्वा च पावकः ॥९६॥
स्तुतो गौपायनैः प्रीतो जगाम त्रिदिवं प्रति ।
अयं माते[क]ति दृष्टास्ते[७] सुबन्धोरसुमाह्वयन् ॥ ९७॥
शरीरमभिनिर्द्दिश्य सुबन्धोः पतितं भुवि ।
सूक्तशेषं जगुश्चास्य चेतसो धारणाय ते ॥९८॥
लब्धासुश्चाय[ख]मित्यस्यां पृथक्पाणिभिरस्पृशन् ।
षड़िदं[ग] वैश्वदेवानि द्वितीयऽङ्गिरसां स्तुतिः[८] ॥९९॥
जन्म कर्म च मद्यश्च[९] इन्द्रेण सह कीर्त्तयन् ।

(१) सूक्तेनैषां स्तुवन्निति क० ग० घ० च० ।
(२) द्विपदं यत्तदचिष्विति क० घ० च० ।
(३) देवानिति ग० ।
(४) परा व्यसुरिति क० ग० घ० ङ० च० ।
(५) सुबन्धोरस्य चेक्ष्वाकोरिति क० ख० घ० च० ।
(६) असूमिति ख० ग० ।
(७) पुषंगेति ख० ।
(८) ऋषिरिति क० ग० च० ।
(९) मद्यश्चेति क० घ० च० ।

(क) ऋ० १०, ६०, ७ । (ख) ऋ० १०, ६०, १२ । (ग) ऋ० १,
६१, १ ।

स्तौति प्रनून[क]मित्याद्याः सावर्ण्यस्य मनोः स्तुतिः॥१००॥
तस्यैव चायुषोऽर्थाय देवान् स्तौत्यभ्ययादृषिः।
सुत्रामाणं[ख]महिमूष[1] द्वचस्त्ये[ग]त्यदितेः स्तुतिः॥१०१॥
पथ्यास्वस्ति स्वस्ति[घ]रद्भिस्वस्तितो मरुतां स्तुतिः।
मारुतीमृचमन्वाहेत्युक्तमाध्वर्य्यवेषु हि॥१०२॥
या गौ[ङ]रिति तथैवास्यां स्तूयते मध्यमानुवाक्।
मित्राय मैत्रावरुणी भुज्युमंहस[च] आश्विनी[2]॥१०३॥
स्तौत्यापि च मनुं स्वस्ति द्वृचे[3] वाचश्च मध्यमां।
अथेमां[छ] द्वे बार्हस्पत्ये भद्रा[ज] आग्नेयमाश्रियः[4]।१०४॥
यज्ज्योतिरमृतं ब्रह्म यद्योगात्समुपाश्नुते।
तज्ज्ञानमभितुष्टाव सूक्तेनाथ बृहस्पतिः॥१०५॥
जीवनार्थं प्रयोगस्तु मन्त्राणां प्रतिषिध्यते।
वेदतत्त्वार्थविज्ञानं प्रायेणात्र हि दृश्यते॥१०६॥

(१) महिमूषीति ख०।
(२) स्तौति प्रनूनमित्याद्याः इत्यादि भुज्युमंहस आश्विनीत्यन्तपाठः क० घ० च० चिह्नितपुस्तकेषु न दृश्यते।
(३) द्वृचे इति ग०।
(४) अथाग्नेयमथाश्रयः इति क० घ० च०, भद्रा आग्नेयमाप्रियाः इति ख०।

(क) ऋ० १०, ६२, ८। (ख) ऋ० १०, ६३, १०। (ग) ऋ० १०, ६४, ५। (घ) ऋ० १०, ६३, १५। (ङ) ऋ० १०, ६५, ६। (च) ऋ० १०, ६५, १२। (छ) ऋ० १०, ६७, १। (ज) ऋ० १०, ६९, १।

आचार्य्याः केचिदित्याहुश्च वाग्विदुषां स्तवः।
यथाभिर्निन्द्यते[१] ऋग्भिः सूक्तेऽन्याभिरनर्थवित् ॥१०७॥
ये रैनामन्वविन्दन्त विद्वांस स्रुषितां शचीम्[२]।
तथा च ह्यभजद्यज्ञे तदृचोक्तं[३] तृतीयया ॥१०८॥
प्रशस्यते दशम्यां[४] तु विद्वानुत्तमया ऋचा[५]।
यज्ञे महर्त्विजामाह विनियोगञ्च कर्म्मणाम् ॥१०९॥
परे तु स्तूयते चोक्ता अष्टौ[क] चैवादितेः[६] सुताः।
धातेन्द्रो वरुणो मित्रः अंशः सूर्य्योऽर्य्यमा भगः ॥११०॥
ऐन्द्रेऽजनिष्ठाः[७] सूक्ते द्वे प्रस्वि[ख]त्यत्र परन्तु यत्।
तत्र प्राच्यः प्रतीच्यश्च स्रवन्त्यो दक्षिणाश्च याः[८] ॥१११॥
ताः सप्त सप्तकैर्वर्गैः संस्तूयन्ते प्रधानतः[९]।

(१) तथार्चिं निन्दते इति ख०।
(२) विद्वांसर्षिगता सतीमिति ख०, विद्वांसर्षिगतां सतीमिति ग०।
(३) उक्तः इति क० घ० च०।
(४) दशम्येति ग०।
(५) ऋचेति ख० ग०।
(६) चास्य ह्यष्टौ चादितये इति क० घ० च०।
(७) जनिष्ठाः इति क० घ० च०।
(८) दक्षिणाश्चेति ख०, दक्षिणाश्रयाः इति ग०।
(९) दशकैर्व्वर्मि संस्तूयन्ते हिभक्तयः इति ग०।

---

(क) ऋ० १०, ७२, ८। (ख) ऋ० १०, ७५, १।

ग्राव्णामां वो[क] मारुते द्वे अभ्रप्रुष[ख] इति स्तुते ॥११२॥
अपश्य[ग]मिति चाग्नेये च इमा[घ] वैश्वकर्म्मणे।
मान्यवे यस्त्[ङ] इत्येते परं यत्तु मम मते ॥११३॥
तदाशीर्वादवत्सूक्तं स्तौति विश्वान् दिवौकसः।
परा[च] कदा स आग्नेयं(१) य[छ]द्[ज]दित्यष्टकं परम् ॥११४॥
मैत्रावरुण्यृक्तत्रास्ति चतुर्थ्यैन्द्राण्युपोत्तमा।
सावित्री चैव सूर्य्या च सैव पत्नी विवस्वतः ॥११५॥
स्तुता वृषाकपायी[झ]ति उषा इति च योच्यते(२)।
उषा ह्येषा(३) त्रिधात्मानं विभज्य प्रैति(४) गोपतिम् ॥११६॥
उषा(५) पुरोदये भूत्वा सूर्य्या मध्यन्दिने स्थिते।
भूत्वा वृषाकपायी च दिनान्तेष्वनुकीर्त्तिनी(६) ॥११७॥

---

(१) आग्नेये इति क० ग० घ० च०।
(२) च पूषा इवितयोच्यते इति ख०।
(३) एषेति क० ग० घ० च०।
(४) अच्चेतीति ख०।
(५) उषाः इति क० घ० च०।
(६) वृषाकपायीति दिनान्तेष्वेव गच्छतीति ख०।

---

(क) ऋ० १०, ७६, १। (ख) ऋ० १०, ७७, १। (ग) ऋ० १०, ७९, १।
(घ) ऋ० १०, ८१, १। (ङ) ऋ० १०, ८३, १। (च) ऋ० १०, ८५,२९।
(छ) ऋ० १०, ८५, १४। (ज) ऋ० १०,८५, २१। (झ) ऋ०१०, ८६,१३।

सत्यसूर्य्यन्तुसोमानां सौर्य्यायच द्यृगुच्यते ।
पराभिस्तिसृभिस्त्वृग्भि[१]रुच्यते सोम औषधः[२] ॥११८॥
विस्पष्टमुत्तरा त्वासाम्टक् चन्द्रमसमर्च्चति ।
सूर्य्यायै भावटत्तन्तु रैभी[क]त्यष्टाभिरुच्यते ॥११९॥
य[ख]दश्विनौ हृच[३]स्तौति सूर्य्य[४] एवोत्तरार्च्चति ।
सप्तदश्यौ वैश्वदेवौ सूर्य्याचन्द्रमसौ परा ॥१२०॥
परस्याः प्रथमौ पादौ सौर्य्यौ चान्द्रमसौ परौ ।
और्णनाभो हृचे त्वस्मिन्नश्विनौ मन्यते स्तुतौ ॥१२१॥
सूर्य्याचन्द्रमसौ तौ हि प्राणापानौ च तौ स्मृतौ ।
अहोरात्रे[५] च तावेव स्यातां तावेव रोदसी ॥१२२॥
अभ्रुवाते हि तौ लोकाञ्ज्योतिषा च रसेन च ।
पृथक् पृथक्के चरतु[६] दक्षिणेनोत्तरेण च ॥१२३॥

---

(१) त्वचेति ख० ।
(२) औषधिरिति ग० ।
(३) हृच इति ग० ।
(४) सूर्य्यमिति पाठः साधुः ।
(५) अहोरात्राविति ख० ।
(६) तौ चरतः इति पाठः सङ्गतः । चेरतुरिति ग० ।

---

(क) ऋ० १०, ८५, ६ । (ख) ऋ० १०, ८५, १४ ।

[1]सुकिंशुक[क]मिति लग्नां सूर्य्यामारोहतीं पतिम् ।
स्तौति विश्वावसुश्चैव हृचे[2] गन्धर्व्वमुत्तरे ॥१२४॥
अनृचरा[ख] इत्यनया यौ तौ[3] स्तौतीह दम्पती ।
गृहान् प्रपद्यमानान्तु पराभिः पञ्चभिर्वधूम् ॥१२५॥
वाससश्च वधूनाञ्च वरदानं प्रपद्यते ।
ततस्तिभिर्विरागस्य यद्दध्व[ग][4] इति वाससः ॥१२६॥
तद्युक्तया तया स्पर्शो निद्रिते पत्युरेव च ।
ऋगुत्तरा तृतीयस्य विभवे सति वाससः ॥१२७॥
अन्यत्र मैथुनाद्भर्त्तुर्हरणं प्रतिषिध्यते ।

---

(१) ख० चिह्नितपुस्तके सुकिंशुकमिति श्लोकात् प्राक्,—
सूर्य्यः सरति भूतेषु सुवीरः पतितानि वा ।
सुहृयत्वापात्येषु सर्व्वकार्य्याणि स वदत् ॥
चात्र द्रवति वाचा य स्त्रावनिम्नतुमुच्यते ।
वमेषत्रे समेतानि निर्म्मितेऽथ चन्द्रमोः ॥
इत्यधिकपाठोऽस्ति ।

(२) सृचे इति ग० ।

(३) यात्रे इति ख० ।

(४) यद्दध्वइति वाससः इत्यादि ऋगुत्तरा तृतीयस्येत्यन्तपाठः क० ग० घ० च० चिह्नितपुस्तकेषु न विद्यते ।

---

(क) ऋ० १०, ८५, २० । (ख) ऋ० १०, ८५, २३ । (ग) ऋ० १०, ८५, ३० ।

ये[क] यज्ञनाग्निर्नौ स्तौति हुवे[१]मा परिपन्थिनः ॥१२८॥
अष्टमे य[ख]दिति त्वाह यादृग्वाधूयमर्हति ।
आशास्ते[२] चैव विविधं ज्ञातिभ्यश्चानुशासनम्[३] ॥१२९॥
वद्धा स्त्री भाववृत्ति[४]श्च परया तत्र कथ्यते ।
पराभिराशीराशास्ते पृथक् ताभ्यः सहैव च । ॥१३०॥
मन्त्रा वैवाहिका ह्येते निगद्यन्ते नृणामपि ।
आर्त्विज्या यजमानाश्च यथारूपं विशेषतः ॥१३१॥
प्रत्यृचं प्रतिकीर्त्यन्ते देवताश्चेह यासु याः[५] ।

(१) ह्वये इति ग० ।
(२) आशास्तीति क० ग० घ० च० ।
(३) आशिभिश्चानुवासनमिति ख० ।
(४) भावक्तिर्मितिरिति क० घ० च० ।
(५) ख० चिह्नितपुस्तके, पराभिराशीराशास्ते इत्यादि देवताश्चेह यासु याः इत्यन्तपाठो न विद्यते । तत्र अस्मिन् स्थले,

गृभ्णामि(ग)तरिवाथोहस्तगृन्ह धनमाशिषः ।
आशास्ते परयास्तस्याः संयोगार्थास्तथाशिषः ॥
पराभिराशिषः शास्ते पृथक् तासां सह क्वचित् ।
अघोरे(घ)ति तृचे तस्याः स(ङ)मिहेति द्वयोर्द्वयोः ॥
आगा प्रजापतेः प्रेमामस्य(च) यथारूपं विशेषतः ।
प्रत्यृचं कीर्त्यते देवता तेषु भाववृत्ततः ॥

इति पाठो वर्त्तते ।

(क) ऋ० १०, ८५,३१ । (ख) ऋ० १०,८५,१५ । (ग) ऋ० १०, ८५,३६ ।
(घ) ऋ० १०, ८५,४४ । (ङ) ऋ० १०,८५,४६ । (च) ऋ० १०, ८५, ४७ ।

वदेत्तां[१] देवतां तासु नराशंसीर्वदेत वा ॥१२२॥
उपस्थः सर्व्वथा चैता भावद्वत्तं प्रपद्यते ।
सूर्य्यया सह सूक्तेऽस्मिन् पादश्चैवात्र लक्ष्यते ॥१२३॥
वि हि[क] वार्षाकपं सूक्तमसौ तु[२] कपिलो वृषा ।
इन्द्रः प्रजापतिश्चैव विश्वस्मादिन्द्र उत्तरः[ख] ॥१२४॥
रक्षोहणा[ग]दि चाग्नेयं[३] चीन् स्तौत्यग्नीन् परं हविः[घ] ।
इमञ्च मध्यमञ्चैव असौ वैश्वानरश्च यः ॥१२५॥
इन्द्रं[ङ] पुरुषसूक्त[च]ञ्च[४] अन्यया पुरुषस्य तु ।
यथैनमभजन् साध्या[५] यज्ञार्थं सोऽर्थ[६] उच्यते ॥१२६॥
आपान्तमन्यु[छ]रित्यस्यां[७] स्तुतः सोमस्तु[८] दृश्यते ।

---

(१) वदेतामिति ख० ग० ।
(२) त्वीति ग० ।
(३) वाग्मेयमिति क० घ० च० ।
(४) तथैन्द्रात्पौरुषं सूक्तमिति ख० ।
(५) साध्येति ख० ।
(६) सार्थं इति ख० ।
(७) इत्येतामिति ख० ।
(८) चत्रेति ख० ग० ।

---

(क) ऋ० १०, ८६, १ । (ख) ऋ० १०, ८६, ५ । (ग) ऋ० १०, ८७, १ ।
(घ) ऋ० १०, ८८, १ । (ङ) ऋ० १०, ८९, १० । (च) ऋ० १०, ९०, १ ।
(छ) ऋ० १०, ८९, ५ ।

सालोक्यात्सात्हचर्य्याद्वा स्तूयते सोम एव वा ॥१३७॥

निपातभाजं सोमस्य अस्यां रथीतरोऽब्रवीत्।
ऐन्द्रो स्येव निपातस्तु[1] स्तुतोऽग्निररुणेन[2]सः ॥१३८॥

यज्ञस्य वो[क] वैश्वदेवे प्रैत[ख] इत्युत्तरन्तु यत्।
तत्रार्ब्बुदस्तु ग्रावाणं मूर्त्तिमन्तमिवार्च्चति ॥१३९॥

पुरूरवसि राजर्षावप्सरास्तूर्व्वशी पुरा।
न्यवसत् संविदङ्कृत्वा तस्मिन् धर्म्मञ्चचार च ॥१४०॥

तया तस्य च संवास[3]मसूयन् पाकशासनः।
पैतामहस्यानुरागमिन्द्रवच्चापि[4] तस्य तु ॥१४१॥

स तयोस्तु वियोगार्थं[5] पार्श्वस्थं वज्रमब्रवीत्।
प्रीतिम्भिन्ध्यनयो[6]र्वज्र मम चेदिच्छसि प्रियम् ॥१४२॥

तथेत्युक्त्वा तयोः प्रीतिं वज्रो भिदति[7] मायया।
ततस्तया विहीनस्तु चचारोन्मत्तवन्नृपः ॥१४३॥

---

(१) ऐन्द्रेषु हि निपातोऽस्येति क० ग० घ० च०।

(२) वरुणेन सः इति ख०।

(३) संवादमिति क० घ० च०।

(४) चानुरागंत्विन्द्रवर्चापीति क० ख० घ० च०।

(५) विभागार्थमिति क० घ० च०।

(६) प्रीतिम्भिद तयोरिति ग०।

(७) भिनत्तीति साधु।

---

(क) ऋ० १०, ९२, १। (ख) ऋ० १०, ९४, १।

चरन् चरंश्च सोऽपश्यद्भिरूपामिवोर्व्वशीम् ।
सखीभिरभिरूपाभिः पञ्चभिः पार्श्वतो वृताम्(१) ॥१४४॥
तामाह पुनरेहीति नेति सा त्वब्रवीन्नृपम् ।
तामुपाह्वयत प्रीत्या दुःखार्त्ता त्वब्रवीन्नृपम् ॥१४५॥
अप्राप्याहं त्वयाद्येह स्वर्गे प्राप्स्यसि मां पुनः ।
आख्यानं प्रति चाख्यान(२)मितरेतरयोरिदम् ॥१४६॥
संवादं मन्यते यास्क इतिहासन्तु शौनकः ।
हय(क) इति परमेन्द्रं प्रते(ख)या (ग)ओषधीस्तवः ॥१४७॥
आर्ष्टिषेणस्तु देवापिः कौरव्यश्चैव शन्तनुः(३) ।
भ्रातरौ(४) कुरुषु त्वेतौ राजपुत्रौ बभूवतुः ॥१४८॥
ज्येष्ठस्तयोस्तु देवापिः कनीयांश्चैव शन्तनुः ।
त्वग्दोषी राजपुत्रस्तु(५) ऋष्टिषेणसुतो(६)ऽभवत् ॥१४९॥

---

(१) वृतां चतसृभिः स्वतः इति ख० ।
(२) चाख्यातमिति क० ग० घ० च० ।
(३) कनीयांश्चैव शन्तनुरिति ख० ।
(४) भारताविति क० ग० घ० च० ।
(५) त्वग्दोषिणी राजपुत्रः इति क० घ० च० ।
(६) आर्ष्टिषेणसुतः इति ग० ।

---

(क) ऋ० १०, ९५, १ । (ख) ऋ० १०, ९६, १ । (ग) ऋ० १०, ९७, १ ।

राज्येन च्छन्दयामासु:[१] प्रजाः स्वर्गं गते गुरौ।
स मुहूर्त्तमिव ध्यात्वा प्रजास्ताः प्रत्यभाषत ॥ १५० ॥

इति बृहद्देवतायां सप्तमोऽध्यायः।

---

(१) छन्दयेयुस्तस्तु राज्यमिति क० घ० च०।

# अथाष्टमोऽध्यायः ।



स राज्यमहमर्हामि नृपतिर्वोऽस्तु शन्तनुः ।
तथेत्युक्ताभ्यषिञ्चंस्ताः प्रजा राज्याय शन्तनुम् ॥१॥
ततोऽभिषिक्ते कौरव्ये वनन्देवापिराविशत् ।
न ववर्षाथ पर्जन्यस्तस्मिन्राष्ट्रे शतं समाः ॥२॥
ततोऽभ्यगच्छद्देवापिं प्रजाभिः सह शन्तनुः ।
प्रसादयामास चैनं तस्मिन् धर्मव्यतिक्रमे ॥३॥
शशिंस च[1] चैनं राज्येन[2] प्रजाभिः सहितस्तदा ।
तमुवाचाथ देवापिः प्रह्वं प्राञ्जलिसंस्थितम्[3] ॥४॥
न राज्यमहमर्हामि त्वग्दोषोपहतेन्द्रियः ।
याजयिष्यामि ते राजन् वृष्टिकामेष्ट्यया स्वयम् ॥५॥
ततस्तन्तु पुरोऽधत्त आर्त्विज्याय स शन्तनुः ।
स चास्य चक्रे कर्माणि[4] वार्षिकाणि यथाविधि ॥६॥

---

(१) सिषेचेति पाठः समीचीनः ।
(२) राज्ये त्विति पाठः साधीयान् । चैव राज्यश्चेति क० ग० घ० ।
(३) प्रवक्तु प्राञ्जलिः स्थितः इति क० ग० घ०, प्रकृन्तु प्राञ्जलिस्थितः मिति ग०, प्रवयं प्राञ्जलिस्थितमिति पुस्तकान्तरम् ।
(४) चकार सोऽस्य कर्माणीति ख० ।

बृहस्पते प्रती(क)त्यृग्भिरीजे चैवं[1] बृहस्पतिम्।
द्वितीययास्य सूक्तस्य बोधिते जातवेदसा ॥७॥
आस्ये ते द्युमति[2] वाचं दधामि स्तुहि देवताः[3]।
इति[4] सोऽस्मै ददौ प्रीतो वाचं देवीं[5] तया च सः ॥८॥
ऋग्भिस्ततस्तृभिर्देवान् जगौ वृष्ट्यर्थमेव तु।
अग्निञ्च सूक्तशेषेण क(ख)मैन्द्रं सूक्तमुत्तरम् ॥९॥
इन्द्रदृह्ये(ग)ति विश्वेषामु(घ)दित्यृत्विक्स्तुतिः परम्।
शक्तिप्रकाशने तेषां[6] विनियोगोऽत्र कीर्त्यते ॥१०॥
प्रे(ङ)तीतिहाससूक्तन्तु[7] मन्यते शाकटायनः।

---

(१) प्रतीत्येतदीजे चैवेति क० घ० च०।

(२) अस्येति द्युमतिरिति ख०।

(३) द्वितीययास्य सूक्तस्येत्यादि दधामि स्तुहि देवताः इत्यन्तपाठः क० ग० घ० च० चिह्नितपुस्तकेषु नापठ्यत।

(४) ततः इति क० ग० घ० च०।

(५) वाचन्देवीमिति क० ग० घ० च०।

(६) शक्तिप्रकाशने नेषामिति क० ख० ग० घ० च०।

(७) इतिहासं प्रेति सूक्तमिति ख०, सेतिहासं प्रेति सूक्तमिति पुस्तकान्तरम्।

---

(क) ऋ० १०, ९८, १। (ख) ऋ० १०, ९९, १। (ग) ऋ० १०, १००, १। (घ) ऋ० १०, १०१, १। (ङ) ऋ० १०, १०२, १।

यास्केन्द्रौ घन[1]मैन्द्रं वा वैश्वदेवन्तु शौनकः ॥११॥
आजावनेन[2] भार्म्याश्च[3] इन्द्रासोमौ तु मुद्गलः ।
अजयद्वृषभं[4] युक्त्वा ऐन्द्रस्य द्रुघणं रथे ॥१२॥
युध्यन् संख्ये जयं प्रेप्सुरैन्द्रो[5] प्रतिरथं जगौ[6] ।
आशु[क]रैन्द्रमथादेवी अमीषा[ख]मित्यृचि स्तुता ॥१३॥
चतुर्थी बार्हस्पत्या स्यादावत्स[ग] प्रसहामिति[7] ।
तृचे च[8] मरुतः प्रे[घ]ति यार्व्वेति परमन्तु यत् ॥१४॥
तच्चाभिरक्तसूक्ताद्यात्तृगेका सूर्य्यमर्च्चति ।
घर्मपरा[9]स्ततस्तु सवितारमभी[ङ]ति या ॥१५॥
सूक्तशेषस्य षडृचः सूर्य्याचन्द्रमसौ सह ।

---

(१) घनामिति ख०, घनामिति घ० च० ।
(२) आजावने त्विति ख०, आजीवनन्त्विति पुस्तकान्तरम् ।
(३) भार्म्मास्य इति ख० गार्ग्यस्येति पुस्तकान्तरम् ।
(४) वृषभमिति क० ख० घ० ।
(५) इन्द्रः इति पाठः सङ्गतः ।
(६) एतच्छ्लोकार्द्धं क० ग० घ० च० चिह्नितपुस्तकेषु नेष्यते ।
(७) एतच्छ्लोकार्द्धं क० ग० घ० च० चिह्नितपुस्तकेषु नोपलभ्यते ।
(८) तृचस्त्विति ख०, तृचे त्विति ग० ।
(९) धर्म्मपरा इति ख० ग० ।

---

(क) ऋ० १०, १०३, १ । (ख) ऋ० १०,१०३,१२ । (ग) ऋ० १०,१०३,५ ।
(घ) ऋ० १०, १०३, १३ । (ङ) ऋ० १०, १०३, ७ ।

तुष्टावेन्द्रमथावी[क]ति अष्टकोऽस्मात् परेण[1] तु ॥१६॥
कौत्सः कदा वसोः [ख]सूक्तं दुर्मित्रो नाम नामतः ।
सुमित्र इति नामास्य[2] गुणार्थमितरं पदम् ॥१७॥
भूतांशस्तु प्रजाकामः कर्म्माणि कृतवान् पुरा ।
न हि लेभे प्रजाः काश्चित्काश्यपो मुनिसत्तमः ॥१८॥
उवाच भार्य्या भूतांशं सुतानिच्छामि यावतः ।
तावतो जनयिष्यामि देवता द्वन्द्वशस्तु हि ॥१९॥
तमभ्ययुस्तु सर्व्वाणि द्वन्द्वानि स्तुतिकाम्यया ।
तान्यवेक्ष्याथ तच्चक्रे[3] नासत्यौ सूक्तभागिनौ ॥२०॥
तदेतदन्ततो भावादाश्विनं सूक्तमुच्यते ।
न ह्यस्मिन्देवतालिङ्गं प्रायेणात्र हि दृश्यते ॥२१॥
सूक्तेन तु परेणात्र स्वयमाविर[ग]भूदिति ।
आत्मानमेव तुष्टाव प्राजापत्याथ[4] दक्षिणा[घ] ॥२२॥
दातॄनत्र स्तुतानेके दक्षिणानां वदन्ति तु ।
दातृत्वाद्दक्षिणानाञ्च भोजास्तत्रर्षिभिः स्तुताः ॥२३॥

---

(१) अष्टकः परमेष्ठीति क० घ० च० ।
(२) सुमित्रस्यैव नाम स्यादिति क० घ० च० ।
(३) सचक्रे इति ख० ।
(४) अथेति ख० ।

---

(क) ऋ० १०, १०४, १ । (ख) ऋ० १०,१०५, १ । (ग) ऋ०१०,१०७;१ ।
(घ) ऋ० १०, १०७; ५ ।

असुराः पणयो नाम रसापारनिवासिनः[1] ।
गास्तेऽपजह्रुरिन्द्रस्य न्यगूहंश्च[2] प्रयत्नतः ॥ २४ ॥
बृहस्पतिस्तथापश्यद्दृष्ट्वेन्द्राय शशंस च ।
प्राहिणोत्तत्र दूतीन्तु[3] सरमां पाकशासनः ॥ २५ ॥
कि[क]मित्यत्रायुजाभिस्तां पप्रच्छुः पणयोऽसुराः ।
कुतः कस्यासि कल्याणि किं वा कार्य्यमिहास्ति ते ॥ २६ ॥
अथाब्रवीत्तां सरमा दूत्यैन्द्री विचराम्यहम् ।
युष्मान् व्रजांस्तान्विष्यन्ती[4] ऐन्द्रीर्गाश्चैव पृच्छति ॥ २७ ॥
विदित्वेन्द्रस्य दूतीन्तामसुराः पापचेतसः ।
ऊचुर्मा सरमे गास्त्वमिहास्माकं स्वसा भव ॥ २८ ॥
सूक्तस्य चान्यया चर्चा[5] युष्माभिस्त्वेव सर्वशः ।
साब्रवीन्नाह[ख]मिच्छामि स्वसृत्वं वा धनानि वा ॥ २९ ॥
पिबेयं[6] तु पयस्तासां गवां यास्ता निगूहथ ।
असुरास्तां तथेत्युक्त्वा तदाजह्रुः पयस्ततः ॥ ३० ॥

(१) सिन्धुपारनिवासिनः इति ख० ।
(२) निगूहस्येति क० घ० च० ।
(३) दूत्येऽथेति ख० ग० ।
(४) विधूय वः सर्व्वा इति क० घ० च० ।
(५) सूक्तस्यान्तपर्य्येति क० घ० च० ।
(६) पिबामीति क० घ० च० ।

(क) ऋ० १०, १०८, १ । (ख) ऋ० १०, १०८, १० ।

सा स्वभावाच्च लौल्याच्च पीत्वा तत्[१] पय आसुरम्।
वरं[२] संवननं ह्यद्यं बलपुष्टिकरं ततः ॥२१॥
शतयोजनविस्तारामतरत्तां रसां पुनः।
यस्याः पारेऽपरे तेषां पुरमासीच्च दुर्ज्जयम् ॥२२॥
पप्रच्छेन्द्रश्च सरमां कच्चिद्गा दृष्टवत्यसि।
सा नेति प्रत्युवाचेन्द्रं प्रभावादासुरस्य हि[३] ॥२३॥
तां जघान तदा क्रुद्ध उद्गिरन्ती पयस्ततः।
जगाम सा भयोद्विग्ना पुनरेव पणीन् प्रति ॥२४॥
पयसस्तस्य पद्धत्या रथेन हरिवाहनः।
गत्वा जघान च पणीन् गाश्च ताः पुनराहरत् ॥२५॥
तेऽवदन्[क] वैश्वदेवन्तु जामदग्न्यस्तथाप्रियः[४]।

---

(१) चेति क॰ घ॰ च॰।

(२) पयः इति ग॰।

(३) त्विति क॰ ग॰ घ॰ च॰।

(४) ख॰ चिह्नितपुस्तके एतच्छ्लोकार्द्धं न विद्यते। तत्र अस्मिन् स्थले,

ते च तं वैश्वदेवं स्यात् ब्रह्मजाया जुहूर्जगौ ॥
यामदग्निसमिद्धाग्न्यो प्रियसूक्तामतः परं।
अजनन्त युगपत् सर्व्वे वैरूपास्तं त्रिभिः परैः।

इति पाठो वर्त्तते।

---

(क) ऋ॰ १०, १०६, १।

युगपद्दे प्रजान्तं तं[१] वैरूपा अग्रयस्तथ: ॥३६॥
इन्द्रं प्रति जगुः सूक्तैः पणीन् प्रतिजिगीषिणम्[२]।
वैश्वदेवं परं सूक्तं घर्म्म[क]त्येकेच तु स्तुतान् ॥३७॥
देवानिन्द्रं च मन्यन्ते छन्दांस्यग्निं[३] च मध्यमम्।
आग्नेयं चित्र[ख] इत्येतज्जगादर्षिरूपस्तुतः ॥३८॥
पिबे[ग]न्द्रं स्तौति ने[घ]त्यन्नं रक्षोघ्नाग्नेयमुत्तरम्[४]।
इति वै[ङ] तावदैन्द्रं त[च]दाप्त्याः षष्ठ्यां निपातिताः[५] ॥३९॥
प्राजापत्यमथाग्नेयं वैन्यमित्यनुपूर्व्वशः।
वरुणेन्द्राग्निसोमाना[६] मिमं न[छ] इति संस्तुतिः[७] ॥४०॥
चतस्रस्त्वृच सूक्तादावग्निरात्मस्तवं जगौ।
स्तुतः सोमस्तु षष्ठ्या च नवम्या[८]श्च पदैस्त्रिभिः ॥४१॥

---

(१) प्रतं तन्त्विति क० घ० च०।
(२) प्रतिमनीषिणः इति ख०।
(३) छन्दांस्यग्निमिति ख०।
(४) आग्नेयन्तु परं ततः इति क० घ० च०।
(५) षष्ठ्याश्च संस्तुतः इति ख०।
(६) सोमाग्निवरुणानामित्विति क० घ० च०।
(७) संस्तवः इति ख० ग०।
(८) नवम्यामिति ख०, नवम्येति ग०।

---

(क) ऋ० १०, ११४, १। (ख) ऋ० १०, ११५, १। (ग) ऋ० १०, ११६, १। (घ) ऋ० १०, ११७, १। (ङ) ऋ० १०, ११९, १। (च) ऋ० १०, १२०, १। (छ) ऋ० १०, १२४, १।

वारुण्यस्तितरास्तिस्र[१] इन्द्र[क]मेवोत्तमं पदम्[२]।
अहं[ख] वाक्सूक्तमर्य्यम्णो मित्रस्य वरुणस्य च ॥४२॥
न तं[ग] रात्र्याः परं सूक्तं वैश्वदेवं ममे[घ]ति यत्।
नमस्ते वैद्युतं सूक्तं त्वाशीर्वादः परन्तु तत्[३] ॥४३॥
थाङ्कल्पयन्ति नोऽरयः कृत्या[४] नाशनमात्मनः[५]।
हिरण्यस्तुतिरापुष्यं नास[ङ]द्य[६]त्परमेष्ठिनः ॥४४॥
वदन्ति भाववृत्तं तद्यो यज्ञ[च] इति चोत्तरम्[७]।
अपे[छ]न्द्रमत्र त्वाश्विन्यौ चतुर्थी पञ्चमी स्तुते[८] ॥४५॥
मैत्रावरुणमीजानं[ज] प्रथमायामृचि स्तुता[९]।
अर्धर्चे द्यौश्च भूमि[१०]श्च आश्विना चोत्तरे ततः[११] ॥४६॥

(१) स्तत्रेति ग०।
(२) उत्तमो जगाविति ग०।
(३) यदिति ख०।
(४) कृत्यामिति ग०।
(५) नतिं कृत्वा दैवतमुच्यते इति ख०।
(६) नेति यदिति क० घ० च०।
(७) उत्तान्तस्य चैव तदिति क० घ० च०।
(८) च येति ख०।
(९) स्तुताः इति ख० ग०।
(१०) पूर्वेति ख०।
(११) आश्विनौ चोत्तरे ततः इति क० ग० घ० च०, उत्तरेश्वित्विति ख०।

(क) ऋ० १०, १२४, ८। (ख) ऋ० १०, १२५, १। (ग) ऋ० १०, १२६, १। (घ) ऋ० १०, १२८, १। (ङ) ऋ० १०, १२९, १। (च) ऋ० १०, १३०, १। (छ) ऋ० १०, १३१, १। (ज) ऋ० १०, १३२, १।

प्रोखे[क]न्द्रं वैश्वदेव्यृक् तु नकिर्देवा मिनीमसि[ख] ।
यस्मिन् वृच[ग]इति तस्मिन् द्युस्थाने स्तूयते यमः ॥ ४७॥
केऽप्यग्निं[घ]केशिनः सूक्तं स्तुत देवाः[ङ]परन्तु यत् ।
देवानामत्र वाद्या स्याद्वायव्यस्तृच उत्तरः[१] ॥ ४८ ॥
त्रायन्तां[च]वैश्वदेव्यृक् तु ग्रेषस्त्वब्देवतः परः[२] ।
स्यादै त[३]द्विश्वभेषज्यं रपसो वा विनाशनम्[४] ॥ ४९॥
भूमिर्लाचा परं सूक्तं तवे[छ]न्द्रं सूक्तमुत्तरम् ।
सूर्य्यरश्मि[ज]रिति तस्मिन् सावित्रः प्रथमस्तृचः ॥ ५० ॥
आत्मा स्तुतः परोच[५]स्तु गन्धर्व्वेणोत्तरे तृचे ।
इन्द्रो वेष[६]निपातेन अथ वा सूर्य्य उच्यते ॥ ५१ ॥
सूक्तेऽस्मिन् देवतास्तिस्र एता एव प्रकीर्त्तिताः ।
आग्नेयं त्वग्ने[झ] तवे तु अग्ने अच्छे[ञ]ति यत्परम्[७] ॥ ५२ ॥

(१) ऋगाद्या तत्र देवानां वाते देवस्तृचः परः इति ख० ।
(२) स्तुतः ख० ।
(३) स्यादेतद्दिति ग० ।
(४) रपसस्वापनोदनमिति ख० ।
(५) परोच्चमिति ख० ।
(६) चैवेति ख० ।
(७) एष श्लोकः क० ग० घ० च० चिह्नितपुस्तकेषु न विद्यते ।

(क) ऋ० १०, १३३, १ । (ख) ऋ० १०,१३४,७ । (ग) ऋ० १०,१३५,१ ।
(घ) ऋ० १०,१३६,१ । (ङ) ऋ० १०, १३७,१ । (च) ऋ० १०,१३७,५ ।
(छ) ऋ० १०, १३८, १ । (ज) ऋ० १०, १३९,१ । (झ) ऋ० १०,१४०,१ ।
(ञ) ऋ० १०, १४१, १ ।

आग्नेयं वैश्वदेवञ्च अय[क]मित्यच तु द्वचाः[१] ।
शार्ङ्गास्तलार ऋषयो अग्निमार्चन् पृथक् पृथक् ॥५३॥
आश्विनं त्यच्चि[ख]दित्येतदय[ग]मैन्द्रं ततः परम् ।
इमां खनामी[घ]ति सूक्तमिन्द्राणी यत्स्वयं जगौ ॥५४॥
तदौपनिषदं सूक्तं भाववृत्तं प्रचक्षते ।
[२]अरण्यानी[ङ]त्यरण्यान्याः स्तुतिरैन्द्रे तदुत्तरे ॥५५॥
सावित्रं सविता यन्त्रैः[च] समिद्धश्चित् समिध्यसे[छ] ।
आग्नेयं श्रद्धया[ज] श्राद्धं मेधासूक्तमतः परम् ॥५६॥
आग्नेयमासुरित्यस्माच्छास[झ] ऐन्द्रे ततः परे ।
सोम एकेभ्य[ञ] इत्येतद्भाववृत्तं प्रचक्षते[३] ॥५७॥

---

(१) द्वृचाः इति ग० ।
(२) ख० चिह्नितपुस्तके अरण्यानीति श्लोकात् प्राक्, उत्तरानपर्ध्नां पाठात्तु स्तौति सूक्ते मनीषधिम् । पतिसंवननीं त्वं पाप्माः सपत्न्यपनोदिकाम् । इत्यधिकं पठितम् ।
(३) वदन्ति त्विति ख० ।

---

(क) ऋ० १०, १४२, १ । (ख) ऋ० १०, १४३,१ । (ग) ऋ० १०,१४४,१ ।
(घ) ऋ० १०, १४५, १ । (ङ) ऋ० १०,१४६ १ । (च) ऋ० १०,१४९,१ ।
(छ) ऋ० १०, १५०, १ । (ज) ऋ० १०,१५१,१ । (झ) ऋ० १०,१५२,१ ।
(ञ) ऋ० १०, १५४, १ ।

शौनको वैश्वदेवन्तु मन्यते शाकटायनः।
सूक्तेऽस्मिन् देवतास्तिस्र एता एव प्रकीर्त्तिता[१] ॥५८॥
यद्‌रायी[क]त्यस्त्वौष्म्नं तच्च चत्तो[ख] इति हृचे।
प्राधान्याद्वा निपाताद्वा स्तूयते ब्रह्मणस्पतिः ॥५९॥
इन्द्रस्यैव य[ग]दित्यस्यां विश्वेदेवाः परो[घ] त्यृचि।
आग्नेयं चाग्नि[२][ङ]मित्येतद्वैश्वदेवमिमा नु कम्[च] ॥६०॥
इन्द्रः प्राधान्यतस्त्वत्र[३] विश्वैर्देवैः सह स्तुतः।
आदित्यैश्च मरुद्भिश्च तथारूपं हि दृश्यते ॥६१॥
सूर्य्या न[छ] इति सौर्य्यन्तु यत्त्वेतदुदसा[ज]विति।
पौलोमी स्वान् गुणांस्त्वत्र सपत्नीनां प्रशंसति ॥६२॥
ऐन्द्रं[४] तीव्रस्य[झ] मुञ्चामि[ञ] भैषज्यं यक्ष्मनाशनम्।
राजयक्ष्महनं सूक्तं प्राजापत्यं तदुच्यते ॥६३॥
ऐन्द्राग्नं मन्यते यास्क एके लिङ्गोक्तदैवतम्।

(१) शौनको वैश्वदेवन्त्वित्यादि एता एव प्रकीर्त्तिता इत्यन्तपाठः क० ग० घ० च० चिह्नितपुस्तकेषु नेष्यते।
(२) त्वग्निमिति ख०।
(३) प्रधानतो वात्रेति ख०।
(४) इन्द्रमिति ख०।

(क) ऋ० १०, १५५, १। (ख) ऋ० १०,१५५,२। (ग) ऋ० १०, १५५,४।
(घ) ऋ० १०, १५५, ५। (ङ) ऋ० १०,१५६,१। (च) ऋ० १०,१५७,१।
(छ) ऋ० १, १५८, १। (ज) ऋ० १०,१५९, १। (झ) ऋ० १०, १६०, १।
(ञ) ऋ० १०, १६१, १।

गर्भसंस्रवसंयुक्तं[1] यत्वेतद्ब्रह्मणे[क]ति तु ॥६४॥

स्रवतामपि गर्भाणां दृष्टस्तदनुमन्त्रणम्।

वैन्यन्तु वेनस्तत्पश्य[2] दचीभ्यां[ख] यक्ष्मनाशनम् ॥६५॥

दुःस्वप्नघ्नमपेही[ग]ति निपातीन्द्रोऽग्निरेव तु।

आसीदृषि[3]र्दीर्घतपाः[4] कपोतो नाम नैर्ऋतः ॥६६॥

चक्रे[5]कपोतस्तस्याग्न्यामग्निधाने पदङ्किल।

स त[6]मात्महितैर्वाक्यैः कपोतं स्तुतवानृषिः[7] ॥६७॥

देवा[घ]इति तु सूक्तेन प्रायश्चित्तार्थमुच्यते।

ऋषभं मा[ङ] सपत्नघ्नं येनेदमिति मानसम् ॥६८॥

तुभ्ये[च]त्यृषी ददृशतुरैन्द्रं गाथिनभार्गवौ।

वरुणो विधातानुमतिर्धाता सोमो बृहस्पतिः ॥६९॥

षड़ेता देवतास्तत्र तृतीयायामृचि स्तुताः।

वातस्ये[छ]ति परेणास्तौदनिलं पितरं स्वकम् ॥७०॥

(१) रक्षोघ्नमेयमित्युक्तमिति ख० ग०।

(२) अपश्यदित्यर्थे पश्यदित्यार्षः। भावहत्तं परश्चैवमिति ख०।

(३) आशीविषः इति ख०।

(४) दीप्ततपाः इति क० घ० च०।

(५) अकरोदिति क० घ० च०।

(६) स्तुतमिति ख०, सुतमिति ग०।

(७) कपोता नैर्ऋतस्तदेति क० ग० घ० च०।

(क) ऋ० १०, १६२, १। (ख) ऋ० १०,१६३,१। (ग) ऋ० १०,१६४,१। (घ) ऋ० १०,१६५,१। (ङ) ऋ० १०,१६६, १। (च) ऋ० १०,१६७,१। (छ) ऋ० १०, १६८, १।

मयो भू(क)रिति यत्सूक्तमपश्यच्छबर(१) ऋषिः ।
नानारूपाः पयस्विन्यो गावस्तत्र तु संस्तुताः ॥७१॥
विभ्राट्(ख) सौर्य्यन्त्वन्य(ग)मैन्द्रन्त्वायाही(घ)त्युषभः स्तुतिः ।
आ त्वा(ङ)राज्ञेऽभिषिक्ताय(२)द्वे सूक्ते चानुमन्त्रणे ॥७२॥
प्रव (च)इत्युत्तरं ग्रावृणं ददर्श स्तुतिमार्ब्बुदिः(३) ।
यस्ततः(४) परमाग्नेयं तत्रार्भव्यृक् प्रसूनवः(छ) ॥७३॥
ऋषिर्जगौ पतङ्गस्तु पतङ्ग(ज)मिति यत्परम् ।
तत्सौर्य्यमेके मन्यन्ते मायाभेदं तथापरे ॥७४॥
मायाभेदे द्वितीयायां वाक् सूतेत्याह शौनकः ।
देवी विभ्रमति मनसापा वाचा विदितां सती(५) ॥७५॥
त्यमूष्वि(झ)ति तु सौपर्णं(६) सूक्तं स्वस्त्ययनं विदुः ।
उ(ञ)दैन्द्रं वैश्वदेवन्तु प्रथश्चे(ट)ति च यत्परम् ॥७६॥

(१) शूभरः इति क० घ० च० ।
(२) अभिषिक्तस्येति ख० ।
(३) आर्ब्बुदः इति ख० ।
(४) यतत इति क० घ० च० ।
(५) मायाभदे द्वितीयायामित्यादि पा वाचा विदितां सतीत्यन्तपाठः क० ग० घ० च० चिह्नितपुस्तकेषु न दृश्यते ।
(६) तार्क्ष्यदैवत्यमिति ख० ।

(क) ऋ० १०, १६९, १। (ख) ऋ० १०,१७०,१ । (ग) ऋ० १०, १७१,१ ।
(घ) ऋ० १०, १७२, १ । (ङ) ऋ० १०,१७३, १ । (च) ऋ० १०,१७५,१ ।
(छ) ऋ० १०, १७६, १ । (ज) ऋ० १०,१७७,१ । (झ) ऋ० १०,१७८,१ ।
(ञ) ऋ० १०, १७९, १ । (ट) । ऋ० १०, १८१, १ ।

आत्मप्रभावमाचख्युस्तचाद्या ऋषयस्त्रयः ।
रथन्तरं यथा स्तोत्रं स्तोत्रञ्चैव यथा बृहत् ॥७७॥
यथा च सम्भृतो घर्म्मः सवितुश्चोपलच्यते[१] ।
बृहस्पति[(क)]रिति तस्मिन् स्तुतः सूक्ते बृहस्पतिः ॥७८॥
आशिषो यजमानस्य केचिदेतां स्तुतिं विदुः[२] ।
प्राजापत्यस्य यत् सूक्तमपश्यं त्वा[(ख)]प्रजावतः ॥७९॥
प्रत्यृचं देवता स्तौति लिङ्गैरेवात्र देवताः[३] ।
आशिषः पुत्रकामस्य प्रथमा हि वदत्यथ ॥८०॥
द्वितीया पुत्रकामायास्तृतीयात्मस्तव[४]स्तृषेः ।
यद्विष्णु[(ग)]रिति सूक्तन्तु वैश्वदेवं प्रचक्षते ॥८१॥
तस्मिन् स्वदारगर्भार्थमृषिराशास्त आशिषः ।

---

(१) वादस्यैवात्र दृश्यते इति क० घ० च० ।

(२) बृहस्पतिरिति तस्मिन्नित्यादि केचिदेतां स्तुतिं विदुरित्यन्तपाठः ख० चिह्नितपुस्तके न विद्यते। तत्र अस्मिन् स्थले, सूक्तेऽस्मिन् देवतास्तिस्र एता एव प्रकीर्त्तिताः इति श्लोकार्द्धं वर्त्तते ।

(३) एवार्थलक्षिताः इति ख०, एष श्लोकः क० घ० च० चिह्नितपुस्तकेषु नोपलभ्यते ।

(४) आत्मस्तवमिति ग० ।

---

(क) ऋ० १०,१८२,१। (ख) ऋ० १०,१८३,१। (ग) ऋ०१०,१८४,१।

परन्तु[१] नेजमेषं हि[२] गर्भार्थं ताव[३]दुच्यते ॥८२॥
माहित्रं यन्महि त्रीणा[क]मादित्यानां स्तुतिं विदुः[४]।
सूर्य्यवरुणमित्राणामादित्येष्वितरेषु तु[५] ॥८३॥
एत[६] एव त्रयो वाता स्तुताः स्वल्पेष्व[७]तोऽन्यथा।
प्राग्न्यर्थं सूक्तमेतद्धि पावनं चैव विश्रुतम् ॥८४॥
पातमपि स्वस्त्ययने दृष्टं तदनुमन्त्रणम्[८]।
उतोऽस्तीत्यितरं वातमाग्नेयं प्राग्नये[ख] परम् ॥८५॥
विस्पष्टं जातवेदस्यं प्रे[ग]ति दाशतयीषु[९] तु।
यत्किञ्चिदेव त्वा[१०]ग्नेयं जातवेदस्यमुच्यते॥८६॥
आयङ्गौ[घ]रिति यत्सूक्तं सार्पराज्ञी[११]स्तयं जगौ।

---

(१) परे त्विति ख०।
(२) नेजमेषेतीति ख० ग०।
(३) वा तदि क० घ० च०।
(४) आदित्येष्वितरेषु त्विति क० घ० च०।
(५) एतच्छ्लोकार्द्धं क० घ० च० चिह्नितपुस्तकेषु नेष्यते।
(६) एक इति क० घ० च०।
(७) स्वल्पेष्विति ख०।
(८) एतच्छ्लोकार्द्धं क० ग० घ० च० चिह्नितपुस्तकेषु न विद्यते।
(९) दाशतयीष्विति ख०।
(१०) अन्यत्रेति ख० ग०।
(११) सर्पराज्ञीति क० घ० ङ०।

---

(क) ऋ० १०, १८५, १। (ख) ऋ० १०, १८७, १। (ग) ऋ० १०, १८८, १।
(घ) ऋ० १०, १८९, १।

तस्मात् सा देवता[१] तत्र सूर्य्यमेके प्रचक्षते ॥८७॥
मुद्गलः शाकपूणिश्च आचार्य्यश्च रथीतरः[२]।
त्रिस्थानाधिष्ठितां वाचं मन्यन्ते प्रत्यृचं स्तुताम् ॥८८॥
भाववृत्तपरं[३] सूक्तं ददर्शाथाघमर्षणः।
परं न विद्यते तस्माच्छान्त्यै वा पावनाय वा ॥८९॥
यथाश्वमेधः क्रतुराट् सर्व्वरिप्रप्रणोदनः[४]।
तथाघमर्षणं ब्रह्म सर्व्वरिप्रप्रणोदनं[५] ॥९०॥
तदादीनि[६] तु यच्चातः संज्ञानं ज्ञानसंस्तवः।
चतुर्थं यत्तु नैर्हस्त्यं तत्सपत्ननिवर्हणम्[७] ॥९१॥
संसमित्[क] प्राध्वराणाञ्चेत्याग्नेये एव ते स्तुते[८]।

---

(१) तस्य स्याद्देवतेति क० ख० घ० च०।
(२) आचार्य्यः शाकटायनः इति ख० ग०।
(३) भाववृत्तम्रतमिति क० घ० च०।
(४) सर्व्वरीप्रप्रणोदनः इति ख०।
(५) यथाश्वमेधः क्रतुराट् इत्यादि सर्व्वरिप्रप्रणोदनमित्यन्तपाठः क० घ० च० चिह्नितपुस्तकेषु नापठ्यत।
(६) त्यदादीनीति क० घ० च०।
(७) चतुर्थस्तैर्हास्त्यं यत्तत्सपत्नीनिवर्हणमिति क० घ० च०।
(८) उभे तत्राग्निदेवते इति क० घ० च०।

---

(क) ऋ० १०, १९१, १।

उशना वरुणश्चेन्द्रश्चाग्निश्च सविता स्तुताः ॥८२॥
संज्ञानं प्रथमस्या[1]न्तु द्वितीयस्यामथाश्विनौ[2]।
तृतीया चोत्तमे च द्वे आशिषोऽभिवदन्ति ताः[3] ॥८३॥
इन्द्रः पूषा सपत्नघ्ने द्वितीयस्यामृचि स्तुतौ।
देवानामितराः प्रोक्ता आशीर्व्वादपराश्च याः[4] ॥८४॥
[5]महानाम्न्य ऋचो गुह्यास्ता ऐन्द्र्यश्चैव यो वदेत्।
सहस्रयुगपर्य्यन्तं सोऽहं ब्रह्म स राध्यते[6] ॥८५॥
[7]पुरीषपदमासान्तु प्रथमं स्यात्प्रजापतेः[8]।

---

(१) प्रथमायामिति पाठः शुद्धः।
(२) उशना वरुणश्चेन्द्र इत्यादि द्वितीयस्यामथाश्विनावित्यन्तपाठः क० घ० च० चिह्नितपुस्तकेषु न दृश्यते।
(३) स त्वाशीर्व्वाद उच्यते इति क० घ० च०।
(४) एष श्लोकः क० घ० च० चिह्नितपुस्तकेषु नेष्यते।
(५) ख० चिह्नितपुस्तके महानाम्न्य इति श्लोकात्प्राक्, संसंसंज्ञानमित्येते शैवननं विदुरिति श्लोकार्द्धं वर्त्तते।
(६) राध्यतीति पाठः साधुः, सोऽहं ब्राह्मः स्वराध्यते इति क० घ० च०, साह ब्राह्मं स्वरं ध्यास्ते इति ख०।
(७) त्वमिदैवतमिति ख०।
(८) ख० चिह्नितपुस्तके पुरीषपदमासान्त्विति श्लोकात् प्राक्,—

विद्याधर्म्मयाज्ञिकाः सूक्तानाञ्च-
स्तस्मिन् स्तुता दृश्यते यः सूक्तभावा।
प्रधानसूक्तं किल देवतायाः
सूक्तभाजः सर्व्वदा शौनकेन ॥

आग्नेयमैन्द्रं वैष्णव्यं पौष्णं दैवन्तु पञ्चमम्[१] ॥९६॥
अग्नेः प्रयाजानुयाजाः प्रैषा ये च[२] हवींषि च।
यद्दैवतं हविस्तु स्यात्प्रैषास्तद्देवतास्तु[३] ते ॥९७॥
निविदां निगदानाञ्च स्वैः स्वैर्लिङ्गैश्च देवताः[४]।
निगदेन[५] निगद्यन्ते याश्च कल्पानुगा ऋचः ॥९८॥
अग्नेरेव तु गायत्र्य उष्णिहः[६] सवितुः स्मृताः।
अनुष्टुभस्तु सोमस्य बृहत्यस्तु बृहस्पतेः ॥९९॥

---

ऐन्द्रा ऋचो महानाम्नीस्तु विद्या
तथा हि दृष्टं ब्राह्मणसूक्तशब्दः।
न दृश्यते सूक्तशब्दो न वित्सु
यथा प्रैषेष्वाहुःसूक्ताभिधानम् ॥

सूक्तैकदेशा इति तान् प्रतीया-
दन्याश्च कुन्त्याः पदशो निशस्ताः।
यद्येतस्रो देवि निपादि संज्ञा
कुन्तापे तत्सर्व्वमेकं सूक्तम् ॥

इत्यधिकपाठोऽस्ति।

(१) विन्द्रं त्वा वैष्णवश्चैव पौष्णश्चैव मनः परमिति ख०।

(२) एवेति क० घ० च०।

(३) चेति ख०।

(४) लिङ्गोक्तदेवता इति क० घ० च०।

(५) निगदेष्विति ख०।

(६) उष्णिकः इति ख०, उष्णिहेति ग०।

पङ्क्तयस्त्रिष्टुभश्चैव विद्यादैन्द्र्यश्च सर्व्वशः।
विश्वेषां चैव देवानां जगत्यो यास्तु काश्चन॥१००॥
विराजश्चैव मित्रस्य स्वराजो वरुणस्य च।
विषये यस्य वा स्यातां स्यातां वा वायुदैवते॥१०१॥
इन्द्रस्यातिधृतिः प्रोक्ता वायोश्च भूरिजः स्मृताः[१]।
यास्त्वतिच्छन्दसः काश्चित्ताः प्रजापतिदेवताः[२]॥१०२॥
विच्छन्दसस्तु वायव्या मन्त्राः पादैश्च ये मिताः।
पौरुषा द्विपदाः सर्व्वा ब्राह्म्य एकपदाः स्मृताः[३]॥१०३॥
समस्ता ऋच आग्नेय्यो वायव्यानि यजूंषि च।
सौर्य्याणि चैव सामानि सर्व्वाणि ब्राह्मणानि च॥१०४॥
वैश्वदेवो वषट्कारो हिङ्कारो ये यजामहे।
रूपं वज्रस्य वाक्पूर्व्वं स्वाहाकारोऽग्निदैवतः॥१०५॥
देवानाञ्च पितृणाञ्च नमस्कारः स्वधैव[४] च।
क्रुष्टो मूर्द्धनि विज्ञेयस्तालव्यः प्रथमः स्वरः॥१०६॥
द्वितीयस्तु भ्रुवोर्मध्ये तृतीयः कर्णसंश्रितः।
चतुर्थो नासिकाग्रे स्यादौरसो मन्द्र उच्यते॥१०७॥

---

(१) एतच्छ्लोकार्द्धं क॰ घ॰ च॰ चिह्नितपुस्तकेषु न पठितम्।

(२) एतच्छ्लोकार्द्धं ख॰ चिह्नितपुस्तके न दृश्यते।

(३) द्विपदा पौरुषं छन्दो ब्राह्मी त्वेकपदा स्मृताः इति ख॰॥

(४) तथैवेति ख॰।

मन्द्रकर्षणसंयुक्तमतिस्वारं प्रशंसति[१] ।
वदन्ति देवताः क्रुष्टं मनुष्यास्त्वितरैस्त्रिभिः[२] ॥२०८॥
द्वितीयं वसवः[३] सर्व्वे गन्धर्वाप्सरसः स्वरम् ।
अण्डजाः पक्षिणः सर्पाश्चतुर्थमुपभुञ्जते[४] ॥१०९॥
मन्द्राः पिशाचा रक्षांसि असुराश्चोपभुञ्जते[५] ।
अतिस्वार[६]स्तु शेषस्य जङ्गमस्थावरस्य च ॥११०॥
वैश्वदेवस्वरः क्रुष्टो नित्यं यो मूर्ध्नि तिष्ठति[७] ।
तालव्यः प्रथमः साम्नां स्वर आदित्यदैवतः[८] ॥१११॥
स्वरो द्वितीयः साध्यानां भ्रुवोर्देशश्रितश्च यः[९] ।
आश्विनस्तु[१०] तृतीयोऽत्र स्वरः कर्णसमाश्रितः ॥११२॥
चतुर्थस्त्वत्र[११] वायव्यो नासिक्यः स्वर उच्यते ।

---

(१) तु तं विदुरिति ख० ।

(२) सर्व्वा मनुष्याः प्रथमं स्वरमिति ख० ।

(३) पशवः इति ख० ग० ।

(४) तूपभुज्यते इति क० घ० च०, चतुर्थश्चोपभुञ्जते इति ख० ।

(५) एतच्छ्लोकार्द्धं क० घ० च० चिह्नितपुस्तकेषु नोपलभ्यते ।

(६) अतिस्वार्य्यः इति क० घ० च०, अतिसार इति ख० ।

(७) ख० चिह्नितपुस्तके, वदन्ति देवताः क्रुष्टमित्यादि नित्यं यो मूर्ध्नि तिष्ठतीत्यन्तं, द्वितीयस्तु भ्रुवोर्मध्ये इति श्लोकात् प्राक् पठितं ।

(८) चेद्दन्त्य एव त्विति क० घ० च० ।

(९) देशं समाश्रितः इति ख० ग० ।

(१०) आग्नेयस्त्विति क० घ० च० ।

(११) त्वेषु इति क० घ० च० ।

पञ्चमस्तु स्वरः प्रोक्तश्चाक्षुषः सूर्य्यदैवतः[१] ॥११३॥
यस्तु सामस्वरः षष्ठः[२] स सौम्यो मन्द्र उच्यते।
विकर्षेण तु मन्द्रस्य[३] युक्तोऽतिस्वार्य्य उच्यते ॥११४॥
स मैत्रावरुणो ज्ञेयो मन्द्रस्थानसमाहितः[४] ॥
सामस्वराणां सप्तानामेते देवा इहोदिताः[५] ॥११५॥
त्रयाणामितरेषां तु लोकाधिपतयस्त्रयः।
वाग्दैवत्योऽथ वाग्नेयः प्रस्तावश्चैव सामसु ॥११६॥
उद्गीथोपद्रवावैन्द्रौ स्यातां वा वायुदेवते।
सौर्य्यः स्यात्प्रतिहारोऽत्र निधनं वैश्वदेवतम् ॥११७॥
हिङ्कारप्रणवाभ्यान्तु पुरस्तादेव कीर्त्तनात्।
इति व्यस्तसमस्तानां मन्त्राणामिह दैवतम्।
देवताविद्विचेत प्रयोगे सर्व्वकर्म्मणाम् ॥११८॥

सप्तर्षयो वसवश्चापि देवा
अथर्व्वाणो भृगवः सोमसूर्य्याः[६]।

---

(१) एतच्छ्लोकार्द्धं क० घ० च० चिह्नितपुस्तकेषु नापठ्यत।
(२) कुष्ट इति क० घ० च०।
(३) कर्षणेनैव मन्द्रस्येति क० घ० च०, विकर्षेन तु मन्द्रस्येति ख०।
(४) मन्द्रस्थानसमाहितः इति क० घ० च०, मन्द्रस्थानसमानि स-हिति ग०।
(५) इति स्वराणां सप्तानामुक्ताः सामसु देवताः इति क० घ० च०।
(६) अंशोऽर्य्यमा इति क० घ० च०।

पथ्यास्वस्ती रोदसी चोक्तमन्त्रे
कुहूर्गुङ्गुरदितिर्धेनुरघ्न्या ॥११९॥
असुनीतिरिला वा धीः[१] विधातानुमतिर्दया।
अङ्गिरोभिः सहैताः स्युरुक्तमन्त्राश्च देवताः ॥१२०॥
वैश्वानरो ह्रि[२] सुपर्णो विवस्वान्
प्रजापतिर्गौः सुधन्वा नगोधः[३]।
अपां नपादर्य्यमा वातजूति-
रिलस्पतिश्चैव रथस्पतिश्च॥१२१॥
स्तभवः पर्ज्जन्यः पर्व्वताग्नाश्च[४] पत्नी-
र्दध्नो भगो[५] देवपत्नीर्दिशश्च।
आदित्या रुद्राः पितरोऽथ साध्या
निपातिनो वैश्वदेवेषु सर्व्वे॥१२२॥
अनुक्रान्ता देवताः सूक्तभाजो
हविर्भाजश्चोभयथा निपातैः।
अप्येवं स्यादुभयथान्यथा वा
न प्रत्यक्षमनृषेरस्ति मन्त्रः॥१२३॥

---

(१) स्यादिति ख० ग०।

(२) द्योः सुधन्वा गोभ्यः इति क० घ० च०, न नद्यः इति ग०।

(३) अपीति ख० ग०।

(४) वा गावश्चेति क० घ० च०।

(५) भर्गः इति ग०।

योगेन दाक्ष्येण दमेन बुद्ध्या
बाहुश्रुत्येन तपसा नियोगैः[१]।
उपास्तव्याः[२] कृत्स्नशो देवता या[३]
ऋचो ह यो वेद स वेद देवान्।
यजूंषि यो वेद स वेद यज्ञान्
सामानि यो वेद स वेद तत्त्वं ॥१२४॥

असौ मे पुत्रकामाया अब्दादर्द्धं च त[४]त्कृतम्।
आशिषो योगमेतं हि वाह्वौ गोर्थेन[५] मन्यते ॥१२५॥
एकारमनुकम्पार्थे नास्मि स्मरति माठरः।
आख्यातभूतकरणं[६] बाष्कुला स्त्री व्ययो कृत ॥१२६॥
मन्त्राणां देवताविद्यः प्रयुङ्क्ते कर्म्म कर्हिचित्।
जुषन्ते देवतास्तस्य[७] हवि[८]र्वा[९]देवताविदः ॥१२७॥
अविज्ञानप्रदिष्टं[१०] हि हविर्नाश्नन्ति देवताः।

(१) अभियोगैरिति ख०।
(२) उपास्यास्ताः इति ख० ग०।
(३) दैवतस्येति क० घ० च०।
(४) स वागर्द्धेन यदिति क० घ० च०।
(५) बह्वो गौर्वेन्विति ख०।
(६) व्याख्याते भूतकरणमिति ख०।
(७) स्वस्येति ग०।
(८) हविर्व्वेति ख०।
(९) नेति क० ग० घ० च०।
(१०) अविज्ञातप्रदिष्टमिति क० घ० च०।

तस्मान्मनसि संन्यस्य देवता जुहुयाद्धविः ॥१२८॥

स्वाध्यायमेव[1] योऽधीते मन्त्रदैवतविच्छुचिः।
स मन्त्रसद्भिः[2] स्वर्गे मन्त्रसद्भिरपीज्यते[3] ॥१२९॥

नियमोऽयं जपे होमे ऋषिच्छन्दोऽथ दैवतम्।
अन्यथा चेत् प्रयुञ्जानस्तत्फलाच्चात्र हीयते ॥१३०॥

ऋषिच्छन्दोदैवतादिज्ञानं यज्ञादिषु श्रुतम्।
तदाश्रित्य प्राणदृष्टिर्विहितात्रेति गम्यताम् ॥१३१॥

अविदित्वा ऋषिच्छन्दोदैवतं योगमेव च।
योऽध्यापयेज्जपेद्वापि पापीयान् जायते तु सः ॥१३२॥

अर्थेप्सवः खल्वृषयश्छन्दोभिर्देवताः पुरा।
अभ्यधावन्निति छन्दो मध्ये त्वाहुर्महर्षयः ॥१३३॥

ऋषिन्तु प्रथमं ब्रूयाच्छन्दस्तु तदनन्तरम्।
देवतामथ मन्त्राणां कर्मस्वेवमिति श्रुतिः ॥१३४॥

आप्तस्य वा अनाप्तस्य[4] विविच्यात्मानमात्मनि।
ईक्षमाणो ह्युभौ यस्मिन्नृचो दैवतवित्पठेत् ॥१३५॥

स ब्रह्मामृतमत्यन्तं योनिं सदसतोर्ध्रुवम्।
महच्चाणु च विश्वेशं विशति ज्योतिरुत्तमम् ॥१३६॥

इति शौनकाचार्यकृतायां बृहद्देवतायामष्टमोऽध्यायः ॥

समाप्ता बृहद्देवता ॥

---

(१) उतेति क० घ० च०।

(२) असत्सदपीति ग०।

(३) अपीष्यते इति क० घ० च०।

(४) आत्मानं वाप्यनधारमिति ख०, आत्मानं साप्यमाधारमिति ग०।

श्रीः

# अथार्षानुक्रमणी ।

## प्रथमं मण्डलम् ।

ऋग्वेदमखिलं ये हि द्रष्टारो मुनिपुङ्गवाः ।
तदनुक्रमणायाहं नमामि परमेश्वरीम् ॥ १ ॥
अग्निमीळ इत्यादि प्रथमं मण्डलं प्रति ।
शतर्चिनस्तु विज्ञेया ऋषयः सुखसिद्धये ॥ २ ॥
तेषां पूर्वो मधुच्छन्दा मेधातिथिरनन्तरः ।
शुनःशेपस्तृतीयोऽयं हिरण्यस्तूप उत्तरः ॥ ३ ॥
काण्वस्तु पञ्चमः षष्ठः प्रस्कण्वः सव्य उत्तरः ।
नोधाः पराशरश्चान्यो गोतमः कुत्स उत्तरः ॥ ४ ॥
कश्यपस्त्वथ कक्षीवान् परुच्छेपस्तदुत्तरः ।
दीर्घतमास्ततोऽगस्त्यः प्रोक्ताश्चैते शतर्चिनः ॥ ५ ॥
ऋचां शतानि दृष्ट्वा(क) इत एव शतर्चिनः ।
जेतादीनान्तु नवास्ति तस्मान्नैते शतर्चिनः ॥ ६ ॥

(क) शतानां द्रष्टृत्वादिति पाठो भवितुमर्हति ।

तत्र त्वादित आरभ्य सूक्तानां दशकं प्रति ।
वैश्वामित्रो[क] मधुच्छन्दा ऋषिरित्यवगम्यताम् ॥७॥
इन्द्रं विश्वा(११)[ख] इति त्वस्य जेता तस्य सुतो मुनिः ।
अग्निं दूत(१२)मुपक्रम्य सूक्तद्वादशकं प्रति ॥८॥
काण्वो मेधातिथिर्नाम मुनिरित्यवगम्यताम् ।
कस्य नून(२४)मुपक्रम्य सूक्तानां सप्तकं प्रति ॥९॥
आजीगर्त्तिः शुनःशेप ऋषिरित्यवगम्यताम् ।
अयन्तु देवराताख्यो वैश्वामित्रस्य कृत्रिमः ॥१०॥
त्वमग्न(३१) इत्युपक्रम्य सूक्तानां पञ्चकं प्रति ।
हिरण्यस्तूपनामायमृषिरङ्गिरसः सुतः ॥११॥
प्र वो यक्ष(३६)मुपक्रम्य सूक्तानामष्टकं प्रति ।
घोरस्य पुत्त्रः कण्वोऽयमृषिरित्यवगम्यताम् ॥१२॥
[ग]अभित्यं मेष(५१)मित्यादिसूक्तानां सप्तकं प्रति ।
सव्यो हि नामाङ्गिरस ऋषिरित्यवगम्यताम् ॥१३॥
नू चित्सहोजा(५८) इत्यादि सूक्तानां सप्तकं प्रति ।
गोतमस्य सुतो नोधा ऋषिरित्यवगम्यताम् ॥१४॥

---

(क) विश्वामित्र इति घ० ।

(ख) (११) चिह्नेनानेन सूक्तसङ्ख्या परिज्ञेया । एवं परत्रापि । मण्डलसङ्ख्या तु मूलत एवावगम्यताम् ।

(ग) अग्ने विवस्वदि(४४)त्यादि सूक्तानां सप्तकं प्रति ।
काण्वस्य पुत्त्रः प्रस्कण्व ऋषिरित्यवगम्यताम् ॥
इत्येवं श्लोकोऽस्मात् पूर्व्वं भवितुमर्हति । सर्व्वानुक्रमण्यादौ तथैवोपलम्भात् ।

पञ्चा न तायु(६५)मित्यादिसूक्तानां नवकं प्रति ।
शाक्त्यः पराशरो नाम ऋषिरित्यवगम्यताम् ॥१५॥
उपप्रयन्त(७४) इत्यादिसूक्तानां विंशतिं प्रति ।
राहूगणो गोतमो[क]ऽयमृषिरित्यवगम्यताम् ॥१६॥
इमं स्तोम(९४)मुपक्रम्य सूक्तानां पञ्चकं प्रति ।
कुत्सो हि नामाङ्गिरस ऋषिरित्यवगम्यताम् ॥१७॥
जातवेदस(९९) इत्यस्मिन् मारीचः कश्यपो मुनिः ।
स यो वृषे(१००)ति सूक्तस्य ऋषयो वार्षागिराः ॥१८॥
ऋज्राश्वः प्रथमस्तेषां भयमानसुराधसौ ।
सहदेवोऽम्बरीषश्च तेऽत्र सूक्ते प्रकीर्त्तिताः ॥१९॥
चन्द्रमा(१०५) इति सूक्तस्य त्रित आप्त्योऽथवा ऋषिः ।
नासत्याभ्या(११६)मुपक्रम्य सूक्तेष्वेकादशस्वथ ॥२०॥
कक्षीवान् दैर्घतमस उशिक्सूनुः स एव च ।
भावयव्यस्तु राजायमृषिरा गधिते(१२६,६)त्यृचः ॥२१॥
तद्भार्य्या रोमशा नामोपोत्तमस्या उपोत्तमे ।
अग्निं होतार(१२७)मित्यादिसूक्तेष्वेव त्रयोदश ॥२२॥
दैवोदासिः परुच्छेपो राजैवायमृषिस्ततः ।
वेदिषदे(१४०)प्रभृतीनां सूक्तानां पञ्चविंशतेः ॥२३॥
दीर्घतमा नामौचथ्य ऋषिरित्यवगम्यताम् ।
कया शुभेतिसंवाद इन्द्रादीनां हि तत्र तु ॥२४॥

(क) गौतम इति घ० ।

कया शुभे(१६५)त्युपक्रम्य युजामासामृचां पुनः।
एकादश्या(क)श्चायमिन्द्र ऋषिरित्यवगम्यताम् ॥२५॥
ऋषयो मरुतस्तत्र तृतीयाद्ययुजामृचाम्।
सूक्तस्यान्त्ये तृचेऽगस्त्य ऋषिरित्यवगम्यताम् ॥२६॥
अगस्त्य एव तन्वा(१६६)दि मित्रावरुणयोः(ख) सुतः।
षड्विंशतेश्च सूक्तानामृषिरित्यवगम्यताम् ॥२७॥
इन्द्रागस्त्ययोः संवादो न नून(१७०)मिति तत्र तु।
प्रथमायास्तृतीयाया ऋचोरिन्द्र ऋषिः स्वयम् ॥२८॥
उभौ वाथ चतुर्थ्यास्तु द्वयोरन्यतरोऽथवा।
पूर्व्वी(१७९)रिति च सूक्तस्य संवादस्य तृचास्त्रयः ॥२९॥
लोपामुद्रा तृचे पूर्व्वे अगस्त्यो मध्यमे तृचे।
अन्तेवासी ब्रह्मचारी सूक्तस्यान्ते तृचे मुनिः ॥३०॥

इति प्रथमं मण्डलम्।

---

(क) एकादश्या इति क०।

(ख) तन्वादिमित्रावरुणयोरिति घ० च०।

# अथ द्वितीयं मण्डलम् ।



मध्यमेष्वृषयो ज्ञेया मण्डलेष्वथ मध्यमाः ।
तत्र त्वमग्न(१) इत्यादिद्वितीयं मण्डलं प्रति ॥१॥
ऋषिर्गृत्समदो नाम विज्ञेयः स च शौनकः ।
औरसः शुनहोत्रस्य शुनकस्यैव कृत्रिमः ॥२॥
तस्मादाङ्गिरसः पूर्वं पश्चात्स भृगुताङ्गतः ।
कृवे व(४) इति सूक्तानां तत्रापि च चतुष्टये ॥३॥
सोमाहुतिर्भार्गवोऽयमृषिरित्यवगम्यताम् ।
इमा गिर(२७) उपक्रम्य सूक्तानां त्रितयं प्रति ॥४॥
ऋषिः कूर्म्मो गार्त्समदः स्वयं गृत्समदोऽथ वा ॥५॥

इति द्वितीयं मण्डलम् ।



# अथ तृतीयं मण्डलम् ।



सोमस्य मे(१)त्युपक्रम्य तृतीयं मण्डलं प्रति ।
विश्वामित्र इति ज्ञेयः स च गाथिसुतः[क] स्मृतः ॥१॥
ऋषभो द्वे प्र वः(१३) सूक्ते विश्वामित्रसुतो जगौ ।
विपाजसे(१५)ति सूक्ते द्वे कात्योत्कील ऋषिर्जगौ ॥२॥
समिध्यमानो(१७) द्वे सूक्ते वैश्वामित्रः कतो जगौ ।
अग्निं होतार(१९)मारभ्य गाथी नाम स कौशिकः ॥३॥
सूक्तान्यपश्यच्चत्वारि सूक्ते निर्मथिते परे ।
देवश्रवोदेववातावृषी एतौ हि भारतौ ॥४॥
कुशिकः ग्रासदि(११)त्यस्मिन्निषीरथसुतो मुनिः ।
अथवा मण्डलद्रष्टा विश्वामित्रो यथा श्रुतिः[ख] ॥५॥
प्र पर्व्वताना(३३)मित्यस्मिन् विपाड्त्यिवमादिभिः ।
नदीभिः सह संवादो विश्वामित्रस्योक्तितीर्षोः ॥६॥
अष्टमी दशमी षष्ठी चतुर्थी च नदीवचः ।
शिष्टा या नवसूक्तस्य विश्वामित्रवचांसि ताः ॥७॥
अस्मे प्रयन्धी(३६,१०)त्येतस्यां घोर आङ्गिरसो मुनिः ।

---

(क) गाथीसुतः इति क० ।

(ख) मुनिरिति ज० ।

(३६,१०) चिह्नेनानेन सूक्तसङ्ख्या ऋक्सङ्ख्या च अवगन्तव्या। एवं पर-त्रापि।

निर्दिश्यमानेऽपि श्रूयते[क] सा न शस्यते ॥८॥
अभि तष्टेव(३८) सूक्तस्य वैश्वामित्रः प्रजापतिः ।
वाच्यो वा स उभौ वा तौ विश्वामित्रोऽथवा श्रुतेः ॥९॥
इमं महे(५४) उपक्रम्य सूक्तानां त्रितयं प्रति ।
अयमेव ऋषिर्विद्यादुक्तगोत्रः प्रजापतिः ।
भार्गवो जमदग्निर्वा मण्डलान्त्ये तृचेऽप्यृषिः ॥१०॥

इति तृतीयं मण्डलम् ।

---

(क) शस्यमानेति भूयते इति अ० ।

# अथ चतुर्थं मण्डलम्।



त्वां ह्यग्ने सद(१)मित्यादि चतुर्थं मण्डलं प्रति।
गौतमो वामदेवो[क]ऽयमृषिरित्यवगम्यताम् ॥१॥
अयं पन्थास्तु संवाद इन्द्रादेः सूक्तमत्र तु।
अयं पन्था(१८) इति तस्या ऋच इन्द्रः स्वयं मुनिः ॥२॥
वामदेवस्तु पञ्चानामर्द्धर्चानां ततः परम्।
न हि न्वस्या(१८,४)दिसप्तानामर्द्धर्चानां तथादितिः ॥३॥
ममच्चन त्वे(१८,८)त्यादीनामृचां सप्तान्त एव तु।
वामदेव ऋषिर्विद्यादृचाप्येवं विशेषतः ॥४॥
त्रसदस्युः पौरुकुत्स्य ऋषिः सूक्ते मम द्विता(४२)।
क उ श्रव[ख](४३)दिति तस्य तथा तस्योत्तरस्य च।
पुरुमील्होऽजमील्हश्च[ग] सौहोत्रौ तावृषी सह ॥५॥

इति चतुर्थं मण्डलम्।

---

(क) गौतमो वामदेवोऽयेति ज०।

(ख) मोक्षमूलरसम्पादित ऋग्वेदे क ऊं श्रवदिति पाठोऽस्ति।

(ग) पुरुमीढोऽजमीढश्चेति ज०।

# अथ पञ्चमं मण्डलम् ।

---

अबोध्यग्निरुपक्रम्य पञ्चमं मण्डलं प्रति ।
पुत्राद्यैः सह भौमोऽत्रिर्मुनिरित्यवगम्यताम् ॥ १ ॥
अत्र त्वनुक्तगोत्रा ये ज्ञेयास्त्वत्रिसुता इति ।
अबोध्यग्नि(१)रिति त्वस्मिन्नृषी बुधगविष्ठिरौ ॥ २ ॥
कुमार(२)मिति चैतस्मिन् कुमारो वा वृशोऽथवा ।
वृशो जार(क) इति ज्ञेय उभौ वात्र समुच्चितौ ॥ ३ ॥
कमेत(२,२)मिति चैतस्यां तथा विज्योतिषे(२,९)त्यृचि ।
वृश एव ऋषिर्विद्यान्न विकल्पसमुच्चयौ ॥ ४ ॥
त्वमग्न(३) इति सूक्तेषु चतुष्केषु वसुश्रुतः ।
सखायः सं व(७) इत्यस्मिन्निषस्तस्योत्तरेऽपि च ॥ ५ ॥
त्वामग्न(९) इति चैतस्मिन् गयस्तस्योत्तरेऽपि च ।
जनस्य गोपाः(११) सूक्तेषु चतुष्केषु सुतम्भरः ॥ ६ ॥
प्र वेधस(१५) इति त्वस्मिन् धरुणोऽङ्गिरसः सुतः ।
बृहद्वय(१६) इति त्वस्मिन् पुरु(ख)स्तस्योत्तरेऽपि च ॥ ७ ॥
प्रातरग्नि(१८)रिति तस्मिन्मृक्तवाहा द्वितो मुनिः ।
अभ्यवस्था(१९)यमग्ने (२०)च सूक्तयोरेतयोर्मुनिः ॥ ८ ॥

---

(क) जान इति सर्वानुक्रमण्यां दृश्यते ।
(ख) पूरुरिति सर्वानुक्रमण्यामुपलभ्यते ।

बभ्रिर्नाम मुनिः पूर्वं प्रयस्वन्तस्तदुत्तरे ।
मनुष्वत्त्वे(२१)ति सूक्तस्य समो नाम मुनिः स्मृतः ॥ ९ ॥
प्र विश्वसाम(२२)न्नित्यस्य विश्वसामेत्यृषिः स्मृतः ।
अग्ने सहन्त(२३)मित्यस्य द्युम्नोऽयं विश्वचर्षणिः ॥ १० ॥
अग्ने त्वं(२४) सूक्तमेकर्चा द्वैपदा विद्यते क्रमात् ।
विप्रबन्धुः श्रुतबन्धुः सुबन्धुर्बन्धुरित्यमी ॥ ११ ॥
गौपायना इमे ज्ञेया अथवा लौपायना[क] इति ।
ऋषिरच्छा व(२५) [ख]इत्यस्मिन्नुत्तरे च वसूयवः ॥ १२ ॥
अनस्वन्ते(२७)ति सूक्तस्य त्रिवृष्णःपुरुकुत्सजौ ।
त्र्यरुणत्रसदस्यू द्वावश्वमेधश्च भारतः ॥ १३ ॥
अन्यासां तिसृणामेषां पूर्व्वासामितरौ सह ।
अथवा भौम एवात्रिस्त्वृषिरत्र न शस्यते[ग] ॥ १४ ॥
दानक्रियायमेकस्य दातृत्वदातृता यतः[घ] ।
समिद्धो अग्नि(२८)रित्यस्मिन् विश्ववारात्रिगोत्रजा ॥ १५ ॥
अर्च्यमे(२९)त्यस्य सूक्तस्य गौरिवीतिः स शक्तिजः ।
कस्य वीरः क(३०) इत्यस्य बभ्रुर्नाम ऋषिः स्मृतः ॥ १६ ॥
इन्द्रो रथाय(३१)सूक्तेऽस्मिन्नवस्यु[ङ]र्नाम संस्मृतः ।

---

(क) लौपायना इति सर्वानुक्रमणी ।

(ख) मोक्षमूलरसम्पादित ऋग्वेदे, अच्छ व इति पाठोऽस्ति ।

(ग) शक्यते इति घ० च० ।

(घ) दानक्रियेयमेकस्य दातृतादातृता यत इति पाठः सम्भवितुमर्हति ।

(ङ) नावस्युरिति सर्वानुक्रमणी ।

अर्हन्निदित्य(३२)मित्यस्य गातुर्नाम मुनिः स्मृतः ॥१७॥
प्राजापत्यः संवरणः सूक्ते महि महे (३३)जगौ ।
प्रभुवसु[क]राङ्गिरसो यस्ते साधिष्ठ(३५) इत्युभे ॥१८॥
सम्भानुने(३७)त्युपक्रम्य सूक्तानां सप्तकं प्रति ।
अत्रिरेव स्वयं भौम ऋषिरित्यवगम्यताम् ॥१९॥
तं प्रत्नथे(४४)ति सूक्तेऽस्मिन्नवत्सारो हि काश्यपः ।
अन्यैश्च दशभिः साकमृषिरित्यवगम्यताम्[ख] ॥२०॥
सदापृणो यजतो[ग]स्य बाहुवृक्तः सुतम्भरः ।
श्रुतवित्तर्ष्यनामा स एवावदो मनसः ॥२१॥
चत्वारोऽमी इमे चान्ये दृष्टलिङ्गा हि सूक्तके ।
विदा दिव(४५) इति त्वस्मिन्नृषिरेष सदापृणः ॥२२॥
हयो न विद्वा(४६)नित्यस्मिन् प्रतिक्षत्र ऋषिः स्मृतः ।
प्रयुञ्जती(४७)ति सूक्तेऽस्मिन्नृषिः प्रतिरथः स्मृतः ॥२३॥
कदु प्रियाय(४८)सूक्तेऽस्मिन् देवं व(४९) इति चोत्तरे ।
ऋषिः क्रमेण विज्ञेयः प्रतिभानुः प्रतिप्रभुः[घ] ॥२४॥
विश्वो देवस्य(५०) सूक्तस्य तथैवाग्ने सुतस्य(५१) च ।
उभयोरनयोरेष स्वस्त्यात्रेय इति स्मृतः ॥२५॥

---

(क) प्रभूवसुरिति सर्वानुक्रमणी ।

(ख) एष श्लोकः, ज० चिह्नितपुस्तके, सम्भानुनेत्युपक्रम्येति श्लोकात् प्राक् पठितः ।

(ग) यजतः इति पाठः सङ्गतः । सदापृणो यजताविति घ० ।

(घ) प्रतिप्रभ इति सर्वानुक्रमणी ।

प्र श्यावाश्व(५२) उपक्रम्य दशसूक्तेष्वतः परम् ।
श्यावाश्वो मरुतां स्तोता मुनिरित्यवगम्यताम् ॥२६॥
ऋतेन ऋत(६२)मित्यस्य सूक्तेऽयं[क] श्रुतविन्मुनिः ।
ऋतस्य गोपा(६३)वित्यस्मिन् वरुणं व(६४) इतीह च ॥२७॥
अर्चनाना ऋषिर्विद्यादयश्चिकेते(६५)ति सूक्तयोः ।
रातहव्योऽथ यजतो बलित्थेति(६०) च सूक्तयोः ॥२८॥
उरुचक्रिर्बाहुवृक्तः पौरस्त्वेव द्वयोर्द्वयोः ।
प्रतिप्रियतमं(७५) सूक्तमवस्युर्दृष्टवान्मुनिः ॥२९॥
अत्रिरेव मुनिर्भौम आभात्यग्नि(७६)रिति द्वयोः ।
अश्विनावेह(७८) सूक्तस्य सप्तवध्रिस्त्वृषिः स्मृतः ॥३०॥
सत्यश्रवा ऋषिर्नाम महे नो अद्य(७९)सूक्तयोः ।
युञ्जते मन(८१) इत्यत्र श्यावाश्वः सूक्तयोर्ऋषिः ॥३१॥
अत्रिरच्छा वदे(८३)[ख]त्यादिषतुःसूक्तेष्वृषिः स्वयम् ।
मण्डलान्त्यस्य सूक्तस्य प्र व(८०) इत्येवयामरुत् ॥३२॥

इति पञ्चमं मण्डलम् ।

---

(क) चेति च० ।

(ख) मोक्षमूलरसम्पादित ऋग्वेदे सर्वानुक्रमण्याञ्च अच्छ वदेति पाठो वर्त्तते ।

# अथ षष्ठं मण्डलम् ।

त्वं ह्यग्न इत्युपक्रम्य षष्ठाख्यं मण्डलं प्रति ।
बार्हस्पत्यो भरद्वाज ऋषिरित्यवगम्यताम् ॥ १ ॥
तत्राप्यन्ये भरद्वाजादृष्यन्ते येऽपवादतः ।
तेषामनुक्रमोत्रास्तु विज्ञेयास्तत्सुता इति ॥ २ ॥
इममू षुव (१५) इत्यस्य सूक्तस्याङ्गिरसः सुतः ।
वीतहव्यो विकल्पेन मुनिरित्यवगम्यताम् ॥ ३ ॥
अभूरेक(३१)स्त्वपूर्व्ये(३२)ति सुहोत्रः सूक्तयोर्ऋषिः ।
शुनहोत्रो य ओजिष्ठः(३३) सद्य त्वे(३४) चेति सूक्तयोः ॥ ४ ॥
कदा(३५) सत्राम दाम(३६)स्तु सूक्तयोरनयोर्नरः ।
ऋषिर्या रयि व(४४)स्त्वादिसूक्तानां त्रितयं प्रति ॥ ५ ॥
यज्ञा यज्ञीय(४८)सूक्ते च शंयुः पुत्रो बृहस्पतेः ।
स्वादुष्किलाय(४७)मित्यस्य गर्गो नाम ऋषिः स्मृतः ॥ ६ ॥
स्तुषे जन(४९)मुपक्रम्य चतुःसूक्तेष्वयं मुनिः ।
ऋजिश्वा ये सुहोत्राद्याः पौत्रास्तैते बृहस्पतेः ॥ ७ ॥
जीमूत(७५)सूक्ते पायुस्तु भारद्वाज ऋषिः स्मृतः ।
उक्तापवादविषयादितरत्रात्र मण्डले ।
स्वयमेव भरद्वाज एवं सर्व्वत्र गम्यताम् ॥ ८ ॥

इति षष्ठं मण्डलम् ।

# अथ सप्तमं मण्डलम् ।

---

अग्निं नर इति त्वेतत्सप्तमं मण्डलं प्रति ।
ऋषिर्वसिष्ठो विज्ञेयो मित्रावरुणयोः सुतः ॥ १ ॥
इन्द्र क्रतुं न (३२,२६) इत्यस्मिन्नर्द्धर्चे मो षु (३२)सूक्तके ।
वसिष्ठपुत्रः शक्तिर्वा वसिष्ठो वा स्वयं मुनिः ॥ २ ॥
श्वित्यञ्च(३३) इति सूक्तस्य नवानामादितस्त्वृचां ।
वसिष्ठ एव पञ्चानां विद्युतो ज्योति(३३,१०)रित्यृचाम् ॥ ३ ॥
वसिष्ठपुत्रा इन्द्रो वा ऋषिरित्यवगम्यताम् ।
तिस्रो वाच(१०१) इति त्वस्मिन् पर्ज्जन्याये(१०२)ति चोत्तरे ।
अग्निपुत्रः कुमारो वा वसिष्ठो वा स्वयं मुनिः ॥ ४ ॥

इति सप्तमं मण्डलम् ।

---

# अथाष्टमं मण्डलम्।

मा चिदन्यदिति(१)त्वेतदष्टमं मण्डलं प्रति ।
प्रगाथादृषयो ज्ञेयाः शृणु वक्ष्यामि तानिह ॥ १ ॥
अनुक्रमणोक्तो यस्त्वत्र मण्डले लक्ष्यते मुनिः ।
स तु काण्व इति ज्ञेयः प्राक्प्रत्यात्मांमदादृषेः ॥ २ ॥
मण्डलाद्यद्वचस्यायं प्रगाथो घोरजो मुनिः ।
स हि घोरस्य कण्वस्य भ्राता सन् पुत्त्रताङ्गतः ॥ ३ ॥
मेधातिथिः परस्तस्मात्स मेध्यातिथिना सह ।
यच्चिद्धि त्व(१,२)त्यृचामासामृषिरासप्तविंशतेः ॥ ४ ॥
स्तुहि स्तुहो(१,३०)त्याद्यानामृचां चतसृणामृषिः ।
प्रयोग[क]पुत्त्र आसङ्गस्तस्य पत्नी तु शश्वती ॥ ५ ॥
अन्वस्य स्थूर(१,३४)मित्यस्याः सा च त्वङ्गिरसः सुता ।
मेधातिथिप्रियमेधावृषी सूक्ते इदं वसो(२) ॥ ६ ॥
आङ्गिरसः प्रियमेधस्तत्र मेधातिथिर्मुनिः ।
शिक्षा वि भिन्दो[ख](२,४१) इत्यस्य द्वचस्यान्यस्य केवलम्॥७॥
पिबा सुतस्य(३)[ग] सूक्तस्य मेधातिथिर्ऋषिः स्मृतः ।
यदिन्द्र प्रागपाक्(४) सूक्ते देवातिथिर्मुनिः स्मृतः ॥ ८ ॥

(क) प्लयोग इति सर्वानुक्रमणी ।

(ख) मोक्षमूलरसम्पादित ऋग्वेदे शिक्ष वि भिन्दो इति पाठोऽस्ति।

(ग) मोक्षमूलरसम्पादित ऋग्वेदे सर्वानुक्रमण्याञ्च पिब सुतस्येति पाठो वर्त्तते ।

दूरादिहेव(५) सूक्तस्य ऋषिर्मेधातिथिः स्मृतः[क] ।
महानिन्द्रो य(६)इत्यस्मिन् वत्सो नाम ऋषिः स्मृतः ॥ ९ ॥
प्र यदस्त्रिष्टुभं(७) सूक्ते पुनर्वत्स ऋषिः स्मृतः ।
आ नो विश्वाभि(८)रित्यस्मिन् सध्वंसो नाम संस्मृतः ॥ १० ॥
आ नूनमश्विने(९)त्यस्मिञ्छ्यावकर्ण ऋषिः स्मृतः ।
यत्स्थ(१०) इत्यस्य सूक्तस्य प्रगाथो नाम संस्मृतः ॥ ११ ॥
त्वमग्ने व्रतपाः(११) सूक्ते वत्स एव मुनिः स्मृतः ।
ऋषिर्य इन्द्र(१२) सूक्तस्य पर्वतो नाम संस्मृतः ॥ १२ ॥
इन्द्रः सुतेषु(१३) सूक्तस्य नारदो मुनिरेव सः ।
यदिन्द्राह(१४)मिति त्वस्मिंस्तमू(१५)मित्युत्तरेऽपि च ॥ १३ ॥
गोषूक्ती चाश्वसूक्ती च ऋषी एतौ काण्वायनौ ।
प्र सम्राज(१६)मिति त्रीणि सूक्तानीरिम्बिठिर्जगौ ॥ १४ ॥
तं गूर्धये(१९)ति चत्वारि ऋषिः सूक्तानि सोभरिः ।
ईळिष्व ही(२३)त्युपक्रम्य चतुःसूक्तेष्वतः परम् ॥ १५ ॥
ऋषिर्विश्वमना नाम स वैयश्व इतिः स्मृतः ।
एषां चतुर्थे सूक्ते तु व्यश्वो वाङ्गिरसो मुनिः ॥ १६ ॥
अग्निरुक्थे(२७) उपक्रम्य पञ्चसूक्तेष्वतः परम् ।
मनुर्वैवस्वतो नाम ऋषिरित्यवगम्यताम् ।
एषां तु मध्यमे सूक्ते मारीचो वाथ काश्यपः ॥ १७ ॥

मेधातिथिस्तु प्रकृतानि(२२) सूक्तं
मेध्यातिथिस्तत्र वयम्(२१)सूक्तम् ।

---

(क) स्मृत इति ग० ।

मेधातिथिः सूक्तमथेन्द्र याहि(२४)
द्वचं तथान्यं वसुरोचिषस्य ॥१८॥
सहस्रमेतेऽङ्गिरसो ह्यपश्य-
स्ततोऽग्निनेन्द्रेण(२५) ततोऽविते(२६)ति ।
चतुर्षु सूक्तेष्वत उत्तरेषु
श्यावाश्वनामा मुनिरत्रिगोत्रः ॥१९॥
अग्निमन्तोषि(३९)सूक्तेषु नाभाकोऽथ चतुर्ष्वृषिः ।
एषां चतुर्थे सूक्ते वा तस्य चान्ये द्वचेऽथवा ॥२०॥
आत्रेयस्त्वर्चनाना वा मुनिरित्यवगम्यताम् ।
इमे विप्रस्य(४३) सूक्तेऽस्मिन् समिधाग्नि(४४)मितीह च॥२१॥
विरूपोऽङ्गिरसः पुत्रस्त्रिशोकस्तत उत्तरे ।
सूक्ते त्वावत(४६) इत्यस्मिन्नश्वपुत्र ऋषिर्वशः ॥२२॥
महि वो महतां(४७) सूक्ते ह्याप्त्यस्त्रित ऋषिः स्मृतः ।
स्वादोरभक्षि(४८)सूक्तस्य प्रगाथाख्य ऋषिः स्मृतः[क] ॥२३॥

---

(क) अतः परं, एकादश सूक्तानि मोक्षमूलरसम्पादितऋग्वेदे समुपलभ्यन्ते। तानि तु सायणेन न व्याख्यातानि। अत्रापि च तेषां न ऋषिनिरूपणमस्ति। किन्तु सर्व्वानुक्रमण्यां तत्र तत्र ऋष्युल्लेखो दृश्यते। यथा, अभि प्र(४९) दश प्रस्कण्वः * * * *। प्रसमृतं (५०) पुष्टिगुः। यथा मनौ (५१) श्रुष्टिगुः। यथा मनौ (५२) आयुः। उपमं त्वा(५३)ऽष्टौ मेध्यः। एतत्ते (५४) मातरिश्वा * *। भूरीत् (५५) पञ्च कृशः * * * *। प्रति ते (५६) पृषध्रः * * * *। युवं देवा (५७) चतुष्कं मेध्यः * * * *। इमानि वां (५८) सप्त सुपर्णः * * * *। इति। वेदार्थदीपिकायां खलु नैतावान् सन्दर्भो व्याख्यातः। जगन्नाथकृतानुक्रमणिकाविवरणे तु सूक्तानामेषामृषिनिरूपणमुपलभ्यते।

अग्न आयाहि(१०) सूक्तस्य तथा तस्योत्तरस्य च।
भर्गः प्रगाथपुत्त्रोऽयमृषिरित्यवगम्यताम् ॥२४॥
प्रगाथ एव प्रो अस्मै(१२) सूक्तेष्वेषु चतुर्ष्वृषिः।
तरोभि(१३)रितिसूक्तस्य प्रगाथतनयः कलिः ॥२५॥

सूक्ते लिह त्वामग्नि(१७)ति सांमदो वा
मत्स्यो मुनिस्तत्सहचारिणो वा।
जालेन नद्धा[क] बहवो हि मत्स्या
मान्योऽथ मैत्रावरुणिः स्वयं वा ॥२६॥

आ त्वा रथ(६८)मिति त्वस्य प्र प्र वस्त्रिष्टुभस्य(६९)[ख] च।
आङ्गिरसः प्रियमेध ऋषिरित्यवगम्यताम् ॥२७॥
यो राजे(७०)ति च सूक्तस्य त्वं न(७१) इत्युत्तरस्य च।
आङ्गिरसः पुरुहन्मा मुनिरत्र यदुत्तरम् ॥२८॥
तत्र त्वन्यतरोऽयं वा सुदीतिपुरुमीळ्हयोः।
हविष्कृणुध्व(७२)मित्यस्मिन् प्रागाथो हर्य्यतो मुनिः॥२९॥
उदीराथा(७३)मिति त्वस्य तथा तस्योत्तरस्य च।
आत्रेयोऽयं गोपवन ऋषिरित्यवगम्यताम् ॥३०॥
आत्रेयः सप्तवध्रिर्वा तयोः पूर्वस्य गम्यताम्।
ऋषिर्युक्ष्वा हि[ग](७५) सूक्तस्य विरूपो वाङ्गिरसः सुतः॥३१॥
इमं नु(७६) सूक्तमारभ्य त्रिषु सूक्तेष्वतः परम्।

---

(क) बद्धा इति ज०।
(ख) मोक्षमूलरसम्पादितऋग्वेदे त्रिष्टुभमिति पाठो वर्त्तते।
(ग) मोक्षमूलरसम्पादितऋग्वेदे युक्ष्वा हीति पाठो वर्त्तते।

काण्वः कुरुसुतिर्नाम ऋषिरित्यवगम्यताम् ॥२१॥
अयं कृनु(७९)रिति तस्मिन् कृनुर्नाम भृगोः सुतः ।
न ह्यन्य(८०)मिति सूक्तेऽस्मिन्नेकद्यूर्नौधसो मुनिः[क] ॥२२॥
आ तू न[ख](८१) इत्युपक्रम्य त्रिषु सूक्तेष्वतः परम् ।
कुसीदी नाम काण्वोऽयमृषिरित्यवगम्यताम् ॥२४॥
प्रेष्ठं व(८४) इति[ग] सूक्तस्य काव्योऽयमुशना मुनिः ।
आ मे हव(८५)मुपक्रम्य त्रिषु सूक्तेष्वतः परम् ॥२५॥
आङ्गिरसः कृष्णनामा मुनिरित्यवगम्यताम् ।
एषान्तु मध्यमे सूक्ते कार्ष्णिर्वा विश्वको मुनिः ॥२६॥
उत्तरे च [घ]वसिष्ठस्य पुत्रो वा द्युम्निको[ङ] मुनिः ।
प्रियमेधो वाङ्गिरस ऋषिरित्यवगम्यताम् ॥२७॥
तम्बोदस्मस्य[च](८८) सूक्तस्य नोधा नाम स गौतमः ।
बृहदिन्द्राय(८९) सूक्तस्य ऋषी तस्योत्तरस्य च ॥२८॥
नृमेधः पुरुमेधश्च सहैतावङ्गिरःसुतौ ।
अपाला नाम कन्ये(९१)ति सूक्तस्यात्रेः सुता मुनिः ॥२९॥
श्रुतकक्षः सुकक्षश्च तावप्याङ्गिरसः सुतौ ।

---

(क) नाम नौधसः इति घ०।
(ख) मोक्षमूलरसम्पादितऋग्वेदे आ तु न इति पाठो दृश्यते ।
(ग) प्रेष्ठं वोऽतिथीति घ० च० ।
(घ) उत्तरमेवेति ज० ।
(ङ) द्युमीक इति सर्व्वानुक्रमणी ।
(च) मोक्षमूलरसम्पादितऋग्वेदे सर्व्वानुक्रमण्यामनुक्रमणिकाविवरणे च तम्बोदस्ममिति पाठो वर्त्तते ।

पान्तमा व(९२) इति तस्य तावृषी अवगम्यताम् ॥४०॥
उद्घेदभी(९३)ति सूक्तस्य सुकक्षः स्वयमेव तु ।
गौर्धयती(९४)ति सूक्तस्य बिन्दुरङ्गिरसः सुतः ।
पूतदक्षोऽथवा ज्ञेयः सोऽपि चाङ्गिरसः सुतः ॥४१॥

आ त्वे(९५)ति सूक्ते तत उत्तरे च
तिरश्चिनामा[क]ङ्गिरसस्तनूजः ।
तत्रोत्तरे मारुतिर्वा द्युतानो
रेभस्ततः काश्यप उत्तरस्य ॥४२॥

इन्द्राय साम(९८) सूक्तस्य तथा तस्योत्तरस्य च ।
नृमेधनामाङ्गिरस ऋषिरित्यवगम्यताम् ॥४३॥
अयन्त एमि(१००) सूक्तस्य नेमो नाम भृगोः सुतः ।
अयमस्मि(१००,४) द्वृचे त्वस्मिन्निन्द्र एव ऋषिः स्मृतः ॥४४॥
ऋधगित्थे(१०१)ति सूक्तस्य जमदग्निः स भार्गवः ।
त्वमग्न(१०२) इति सूक्तस्य प्रयोगो नाम भार्गवः ॥४५॥
अथवा बार्हस्पत्यः पावकोऽग्निर्मुनिः स्मृतः ।
गृहपतियविष्ठाख्यावग्नी वा सहसः सुतौ ॥४६॥
तयोरन्यतरो वाग्न्योर्ऋषिरित्यवगम्यताम् ।
ऋषिस्तदर्शि(१०३) सूक्तस्य सोभरिर्नाम काण्वजः ॥४७॥

इत्यष्टमं मण्डलम् ।

---

(क) तिरश्ची नामेति सर्वानुक्रमणी, अनुक्रमणिकाविवरणञ्च ।

# अथ नवमं मण्डलम् ।

स्वादिष्ठये(१)त्युपक्रम्य नवमं मण्डलं प्रति ।
पावमान्यस्तु विज्ञेया ऋषयः सौमिकाश्च ते(क) ॥ १ ॥
मण्डलाद्यस्य सूक्तस्य मधुच्छन्दा ऋषिः स्मृतः ।
पवस्व देववीः(२) सूक्ते मेधातिथिरिति स्मृतः ॥ २ ॥
एष देव(३) इति लस्य शुनःशेपो मुनिः स्मृतः ।
सना च सोम(४)(ख) सूक्तस्य हिरण्यस्तूप ऋषिः स्मृतः ॥ ३ ॥
एतेषामुक्तगोत्रत्वाद्गोत्रोक्तिर्न कृता मया ।
समिद्धु(५) इत्युपक्रम्य सूक्तानां विंशतिं प्रति ॥ ४ ॥
असितो वा देवलो वा ऋषिरेतौ तु काश्यपौ ।
ऋषिः पवस्व(२५) सूक्तेऽस्मिन्नागस्त्यः स दृल्हच्युतः ॥ ५ ॥
दृल्हच्युतस्य पुत्त्रोऽयमिध्मवाहस्तदुत्तरे ।
एष कवि(२७)रेष वाजी(२८) सूक्तयोरनयोः क्रमात् ॥ ६ ॥
नृमेधः प्रियमेधश्च मुनिराङ्गिरसाविमौ ।

---

(क) सर्व्वानुक्रमणीवेदार्थदीपिकाजगन्नाथकृतानुक्रमणिकाविवरणेषु नवममण्डलस्य सोमदेवताकत्वकीर्त्तनमस्ति । अत्र तु नवममण्डले सौमिकानामृषित्वं दृश्यते । अत्र शौनक एव प्रमाणम् । अथवा सोमो देवता एषामिति व्युत्पत्त्या ऋषयोऽपि सौमिका इति व्यपदिश्यन्ते । अधिकेन व्यपदेशा भवन्तीति न्यायात् ।

(ख) मोक्षमूलरसम्पादितऋग्वेदे सर्व्वानुक्रमण्याञ्च सन च सोमेति पाठो वर्त्तते ।

प्रास्य(२९) प्र धारा अस्ये(३०)ति सूक्तयोरनयोः क्रमात् ॥७॥
नृमेधस्त्वाथ बिन्दुश्च मुनिरङ्गिरसः सुतः ।
प्र सोमासः (३१) प्र सोमासः(३२) सूक्तयोरनयोः क्रमात् ॥८॥
राहूगणो गोतमोऽयं श्यावाश्वश्चात्रिगोत्रजः ।
प्र सोमास(३६) उपक्रम्य द्वयोराद्यस्त्रितो मुनिः ॥९॥
द्वयोर्द्वयोरुत्तरयोर्ऋषयोऽङ्गिरसः सुताः ।
प्रभूवसूरहूगणो बृहन्मतिरिमे त्रयः ॥१०॥
प्र ये गाव(४१) उपक्रम्य त्रिषु सूक्तेष्वतः परम् ।
मेध्यातिथिः स्वयं काण्व ऋषिरित्यवगम्यताम् ॥११॥
त्रिष्वेवाङ्गिरसोऽयास्यः प्र ण(४४) इत्युत्तरेष्वृषिः ।
कविस्तु भार्गवः सूक्तेष्वया सोम(४७) इति त्रिषु ॥१२॥
उचथ्यस्त्रिषु सूक्तेषूत्त(५०) इत्यङ्गिरसः सुतः ।
उत्ते(५१) सूक्त उपक्रम्य सूक्तानामष्टकं प्रति ॥१३॥
काश्यपोऽयमवत्सार ऋषिरित्यवगम्यताम् ।
अया वीती(६१)ति सूक्ते चामहीयुरङ्गिरःसुतः ॥१४॥
एते असृग्र(६२)मित्यस्मिन् जमदग्निर्भृगोः सुतः ।
आ पवस्वे(६३)ति सूक्तेऽस्मिन्निध्रुविः काश्यपो मुनिः ॥
वृषा सोमे(६४)ति सूक्तेऽस्मिन् मारीचः कश्यपो मुनिः॥१५॥

हिन्वन्ति(६५)सूक्तं जमदग्निरार्षः
स्वयं भृगुर्वा वरुणस्य पुत्रः ।
असिद्धगोत्रास्तु पवस्व(६६)सूक्तं
वैखानसा नाम शतं विदुस्ते ॥१६॥

त्वं सोम(६७)सूक्ते सहचारसूक्तेषु
मुख्येषु सप्तऋषयः प्रसिद्धाः ।
भरद्वाजः कश्यपो गोतमोऽत्रि-
र्विश्वामित्रो जमदग्निर्वसिष्ठः ॥१७॥

उत्तराणां तु शिष्टानामृचामङ्गिरसः सुतः ।
पवित्रो वा वसिष्ठो वा ह्युभौ वा तादृषौ सह ॥१८॥
प्र देव(६८)मिति वत्सप्रिः[क] सूक्तं भालन्दनो जगौ ।
इषुः(६९) सूक्तं त्वाङ्गिरसो हिरण्यस्तूप उत्तरम् ॥१९॥
त्रिरस्मा(७०) इति सूक्तेऽस्मिंस्तत आ दक्षिणो(७१)त्तरे ।
रेणुः पूर्व्वोऽथ ऋषभो वैश्वामित्रौ च तादृषौ ॥२०॥
हरिं मृजन्ति(७२) सूक्तस्य सर्के द्रप्सस्य(७३) च क्रमात् ।
हरिमन्तः पवित्रस्य मुनिरङ्गिरसः सुतः ॥२१॥
शिशुर्न(७४) सूक्ते कक्षीवान्मुनिर्दीर्घतमःसुतः[ख] ।
अभि प्रियाणि(७५)पक्रम्य पञ्चसूक्तेष्वतः परम् ॥२२॥
कविर्नाम भृगोः पुत्र ऋषिरित्यवगम्यताम् ।
सोमस्य धारे(८०)त्यादीनां सूक्तानां त्रितयं प्रति ॥२३॥
भारद्वाजो वसुर्नाम मुनिरित्यवगम्यताम् ।
पवित्र(८३)मिति सूक्तस्य पवित्रोऽङ्गिरसः सुतः ॥२४॥
ऋषिः पवस्व(८४) सूक्तस्य वाच्यो नाम प्रजापतिः ।
इन्द्राय सोम(८५) सूक्तस्य वेनो नाम स भार्गवः ॥२५॥

---

(क) वत्सप्रीरिति सर्व्वानुक्रमणी ।
(ख) दीर्घतमः सुत इति घ० च० । कक्षीवानौशिज इत्यनुक्रमणिका-
विवरणम् ।

प्र ते(८६) हि सूक्तं प्रथमं दृशर्च-
मक्रष्टमाषा ऋषयो विदुस्ते ।
निवावरी[क]स्ते सिकता द्वितीयं
तृतीयमेते खलु पृश्नयोऽजाः ॥२६॥
गणास्त्रयोऽमी कथितास्तुर्थ-
मेषां तु गोत्रं क्वचिदप्रसिद्धम् ।
शिष्टास्तु पञ्चस्वृषिरत्रिरेता-
स्वन्त्ये तृचे गृत्समदः प्रसिद्धः ॥२७॥

प्र तु द्रवे(८७)त्युपक्रम्य सूक्तानां त्रितयं प्रति ।
काव्योऽयमुशना नाम ऋषिरित्यवगम्यताम् ॥२८॥
प्र हिन्वानो(९०) वसिष्ठस्तु मित्रावरुणयोः सुतः ।
असर्जि वक्का(९१)सूक्तस्य तथा तस्योत्तरस्य च ॥२९॥
मारीचः कश्यपो नोधाः साकमुत्रस्य(९३)[ख] गौतमः ।
अधि य(९४)त्र कनिक्रन्ति(९५) सूक्तयोरनयोः पुनः ॥३०॥
घोरः कण्व ऋषिः पूर्व्वे काण्वः प्रस्कण्व उत्तरे ।
प्र सेनानी(९६)ति सूक्तस्य दैवोदासिः प्रतर्दनः ॥३१॥
अस्य प्रेषे(९७)ति सूक्तस्य वसिष्ठः प्रथमे तृचे ।
उत्तरेषु नवस्वेते तस्य पुत्राः पृथक् पृथक् ॥३२॥
इन्द्रप्रमतिरेकस्तु तेषां वृषगणः परः ।

---

(क) निवावरीरिति प्रथमार्थे द्वितीयेत्यार्षम् ।

(ख) मोक्षमूलरसम्पादितऋग्वेदे सर्व्वानुक्रमण्यामनुक्रमणिकाविवरणे च साकमुक्ष इति पाठो वर्त्तते ।

मन्युश्च उपमन्युश्च व्याघ्रपाच्छक्तिरुत्तरः ॥२३॥
कर्णश्रु[क]श्च मृलीकश्च वसुक्रो नवमः स्मृतः ।
चतुर्द्दशानां शिष्टानामृषीणां शाक्यः पराशरः ॥२४॥
सोमः सुत(९७,४४)स्तथान्यानां कुत्स आङ्गिरसो मुनिः ।
अम्बरीषोऽभि नः(९८) सूक्ते मान्धातृतनयस्तथा ॥२५॥
भारद्वाज ऋजिश्वा च तावेतौ सहितावृषी ।
रेभसूनू काश्यपौ च द्वयोरुत्तरयोर्ऋषी ॥२६॥
पुरोजितौ(१०१)ति सूक्तस्य सप्तचा ऋषयः स्मृताः ।
श्यावाश्वः[ख] प्रथमोऽन्धीगुर्ययातिर्नाहुषः परः ॥२७॥
नहुषो मानवस्त्वेको मनुः सांवरणः परः ।
चत्वार एते सप्तचाः शेषे वाच्यः प्रजापतिः ॥२८॥
क्राणे(१०२)त्याप्त्यस्त्रितः सूक्ते द्वित आप्त्यस्तदुत्तरे ।
पर्व्वतो नारदः काण्वौ[ग] सखायः(१०४) सूक्तयोः सह ॥२९॥
पूर्व्वे तु द्वे शिखण्डिन्यौ काश्यप्यौ वाप्सरः स्त्रियौ ।
इन्द्रमच्छे(१०६)ति सूक्तस्य सप्तचा ऋषयस्त्रयः ॥४०॥
चाक्षुषोऽग्निश्च चक्षुश्च मानवो मनुराप्सवः ।
सूक्तस्य शिष्टे पञ्चर्चे चाक्षुषोऽग्निर्ऋषिः स्मृतः ॥४१॥

---

(क) कर्णश्रुदिति सर्व्वानुक्रमणी, अनुक्रमणिकाविवरणञ्च ।

(ख) श्यावाश्विरिति सर्व्वानुक्रमणी, अनुक्रमणिकाविवरणञ्च ।

(ग) काण्वावित्यत्र काश्यपाविति सर्व्वानुक्रमणी. अनुक्रमणिकाविवरणञ्च ।
वेदार्थदीपिकायान्तु तौ काण्वाविति व्याख्यातम् ।

परीत(१०७) इति सूक्तेऽस्मिन् भारद्वाजादयो[क] विदुः ।
एते तु सप्त ऋषयः सगोत्राः परिकीर्तिताः ॥ ४२॥
पवस्वे(१०८)त्युत्तरं सूक्तं सप्तैते त्वृषयो विदुः ।
तस्य त्वाद्ये द्वृचे शाक्त्यो गौरिवीतिर्ऋषिः स्मृतः ॥ ४३॥
तृतीयाया ऋचः शक्तिर्वासिष्ठोऽन्ये तृचेऽपि च ।
अथ द्वृचानां शिष्टानामूरुराङ्गिरसो मुनिः ॥ ४ ४॥
भारद्वाज[ख] ऋजिश्वा च तथैवाङ्गिरसौ नृपाः ।
ऊर्ध्वसद्मा कृतयशा ऋणञ्चय इति त्रयः ॥ ४ ५॥
धिष्ण्याग्नयः[ग] परि प्रे(१०९)ति सूक्तमैश्वरयो विदुः ।
पर्य्यूषु प्रे(११०)ति सूक्तस्य त्र्यरुणपुरुकुत्सजौ ॥ ४ ६॥
त्रसदस्युश्च मुनिरित्यवगम्यताम् ।
अया रुचे(१११)ति सूक्तस्य पारुच्छेपिरनानतः ॥ ४ ७॥
नानान(११२)मिति सूक्तस्य शिशुराङ्गिरसो मुनिः ।
शर्य्यणावति(११३)सूक्तस्य य इन्द्रो(११४)त्तरस्य च ॥ ४ ८॥
मारीचः कश्यपो नाम ऋषिरित्यवगम्यताम् ।

इति नवमं मण्डलम् ।

---

(क) भरद्वाजकश्यपगोतमात्रिविश्वामित्रजमदग्निवसिष्ठा इति अनुक्रमणिकाविवरणं वेदार्थदीपिका च ।

(ख) भारद्वाजा इति ष० ।

(ग) धिष्ण्याग्नेय इति ष० च० ।

# अथ दशमं मण्डलम् ।

अग्ने बृहन्निति(१)त्येतद्दशमं मण्डलं प्रति ।
चुद्रसूक्ता महासूक्ता विज्ञेया ऋषयस्त्विति ॥१॥
मण्डलादिमुपक्रम्य सप्तसूक्तेष्वतः परं ।
आप्त्यस्त्रितो मुनिस्त्वाष्ट्रस्त्रिशिरा: सूक्तयोर्द्वयोः ॥२॥
प्रकेतुने(८)ति तत्रापि यत्सूक्तद्वरमन्त्रयोः ।
अम्बरीषसुतस्तत्र सिन्धुद्वीपोऽथवा मुनिः ॥३॥
ओ चि(१०)त्सूक्तेष्वयुक्षु षष्ठ्या सह मुनिर्यमी ।
वैवस्वतो यमो नाम नवम्या सह युक्षु तु ॥४॥
वृषा(११)द्यावा(१२)युजे(१३)त्येषां सूक्तानां त्रितयं प्रति ।
आङ्गि[क]र्नाम हविर्धानो मुनिरित्यवगम्यताम् ॥५॥
एतेषामुत्तरे सूक्ते विवस्वानदितेः सुतः ।
परेयिवांसं(१४)सूक्तस्य यमो वैवस्वतो मुनिः ॥६॥
उदीरतामुपक्रम्य पञ्चसूक्तान्यतः परम् ।
यमपुत्रा विदुस्तेषामु(१५)च्छङ्खो दमनस्तु मा(१६) ॥७॥
एको देवश्रवास्त्वष्टा(१७)परः सङ्कुसुकः परम्(१८) ।
मथितस्तु नि वर्तध्व(१९) मस्मिन् सूक्ते मुनिः पुनः ॥८॥
भृगुर्वा वारुणिर्विद्याद्भार्गवश्च्यवनोऽथवा ।
भद्र(२०)मित्यादिसूक्तानां सप्तानां विमदो मुनिः ॥९॥

---

(क) आङ्गिरित्यत्र आङ्गिरस इति अनुक्रमणिकाविवरणम् ।

प्राजापत्यः स ऐन्द्रो वा वसुक्रदा वसुक्रजः ।
ऋषिर्वसुक्र ऐन्द्रीयस्त्रिषु सूक्तेष्वसत्विं(२७)ति ॥१०॥
तन्मध्यसूक्ते विश्वो हि(२८) प्रथमाद्या ऋचो मुनिः ।
इन्द्रस्नुषा वसुक्रस्य पत्न्येवेन्द्रो युजामृचाम् ॥११॥
चतुर्थ्यां सह शिष्टानां वसुक्रस्त्वयुजामृचाम् ।
प्र देवत्रे(३०)ति सूक्तानां पञ्चानां कवषो मुनिः ॥१२॥
ऐलूषो मौजवान् वाचः प्रावेपा मे(३४)ति चोत्तरे ।
लुशो मुनिः स धानाकस्त्वबुभ्र(३५)मितिसूक्तयोः ॥१३॥
नमो मित्रस्य(३७) सूक्तस्य सूर्य्यजोऽभितपा मुनिः ।
अग्निम(३८)इति सूक्तस्य ऋषिरिन्द्र[क]स्तु मुष्कवान् ॥१४॥
यो वां परिज्मा(३९)सूक्तस्य रथ(४०)मित्युत्तरस्य च ।
कक्षीवतः सुता घोषा ह्यृषिकेत्यत्र कीर्त्तिता ॥१५॥
समानमु त्यं(४१)[ख] घौषेयः सुहस्त्यो नाम वा ऋषिः ।
अस्तवे(४२)ति त्रिसूक्तानां कृष्ण आङ्गिरसो मुनिः ॥१६॥
दिवस्परि(४५)प्र होते(४६)ति सूक्तयोरनयोस्त्वृषिः ।
भालन्दनस्तु वत्सप्रि[ग]र्जगृभ्मे(४७)त्युत्तरस्य तु ॥१७॥
सप्तगुर्नाम विज्ञेयो मुनिरङ्गिरसः सुतः ।
अहम्भुव(४८) मुपक्रम्य सूक्तानां त्रितयं प्रति ॥१८॥

---

(क) इन्द्र इति सर्व्वानुक्रमणी, अनुक्रमणिकाविवरणञ्च ।

(ख) समानमु त्ये इति घ० च० ज० ।

(ग) वत्सप्रीरिति सर्व्वानुक्रमणी । वत्सः प्रिय इति अनुक्रमणिकाविवरणम् ।

ऋषिरिन्द्रस्तु वैकुण्ठो महत्त(५१)दिति तु त्रिषु ।
देवानामग्निना साकं संवादः क्रियतेऽत्र तु ॥१९॥
यमैच्छाम(५७)ति सूक्तेऽस्मिन् देवा ऋषय उत्तरे ।
विश्वे देवा(५२)इति त्वस्मिन् सौचीकोऽग्निस्त्वृषिः स्मृतः॥२०॥
महत्त(५१)दिति पूर्व्वे तु देवा एवायुजाम्वृषाम् ।
युजां त्वग्निः स सौचीकस्तद्य(५७,४)ति द्वयस्य च ॥२१॥
तां सु ते कीर्त्ति(५४)मित्यादिसूक्तानां चितयं प्रति ।
वृहदुक्थो वामदेव्य ऋषिरित्यवगम्यताम् ॥२२॥
मा प्र गामे(५७)त्युपक्रम्य चतुःसूक्तेष्वतः परम् ।
बन्ध्वाद्या[क] ऋषयो ज्ञेया गोपायनसुतास्त्रयः ॥२३॥
स्वसागस्त्यस्य[ख] मातैषामगस्त्यस्ये(६०,६)त्यृचो मुनिः ।
इदमित्थे(६१)ति सूक्तस्य ये यज्ञेनो(६२)त्तरस्य च ॥२४॥
नाभानेदिष्ठनामायमृषिर्ज्ञेयः स मानवः ॥२५॥
गयः प्लातो मुनिर्विद्यात्परावत(६३) इति द्वयोः ।
वासुको वसुकर्णोऽयमग्निरिन्द्र(६५) इति द्वयोः ॥२६॥
अयास्यनामाङ्गिरस इमान्धिय(६७)मिति द्वयोः ।
वाध्र्यश्वस्तु सुमित्रोऽयं भद्रा अग्ने(६९)रिति द्वयोः ॥२७॥
वृहस्पतिस्त्वाङ्गिरसो वृहस्पत(७१) इति द्वयोः ।

---

(क) गौपायना लौपायना वा बन्धुः सुबन्धुः श्रुतबन्धुर्विप्रबन्धुश्चेति अनुक्रमणिकाविवरणम्। वेदार्थदीपिकायान्तु, अमीषां लौपायनत्वं न कर्त्तव्यम् । अपि तु गौपायनत्वमेवेति वक्तुमुक्तम्। * * * अस्य मतस्य सुबन्धोर्भ्रातरस्त्रयो बन्धुश्रुतबन्धुविप्रबन्धव इति दृश्यते ।

(ख) बन्ध्वादीनां माता अगमातिरिति अनुक्रमणिकाविवरणम् ।

अनयोरुत्तरे सूक्ते लौक्यो (क)वा स बृहस्पतिः ॥२८॥
अदितिर्वा दक्षपुत्री मुनिरित्यवगम्यताम् ।
ऋषिः शाक्यो गौरिवीतिर्जनिष्ठा(७३) इति सूक्तयोः ॥२९॥
सिन्धुक्षित्प्रैयमेधो(ख)ऽयं प्र सु वः(७५) सूक्त उत्तरे ।
ऐरावतो जरत्कर्ण आ व ऋञ्जस(७६) उत्तरे ॥३०॥
भृगुपुत्रः स्यूमरश्मिरभ्रप्रुष(७७) इति द्वयोः ।
अग्निर्वैश्वानरो वायं स सौचीकोऽग्निरेव वा ॥३१॥
सप्तिर्वाजम्भरो वायमपश्य(७९)मिति सूक्तयोः ।
भौवनो विश्वकर्मायं य इमे(८१)त्यादिसूक्तयोः ॥३२॥
ऋषिस्तु तापसो मन्युर्यस्ते मन्य(८३)विति द्वयोः ।
सत्येनोत्तभिता(८५)सूक्तं सूर्या साविचीत्यार्षं तत् ॥३३॥
वि ही(८६)ति सूक्तमिन्द्राण्या इन्द्रस्य च वृषाकपेः ।
वि हि सोतोः(८६,१)(ग)किं सुबाहु(८६,८) विन्द्राणी (८६,११)
नाह(८६,१२)मित्यृचां ॥३४॥
अयमेमी(८६,१९)ति चारभ्य तथा चतसृणामृचाम् ।
उक्ष्णो ही(८६,१४)त्यनया साकं नवानामिन्द्र एव दृक् ॥३५॥
उवे अम्ब सुलाभिके(८६,७) वृषाकपायि रेवति(८६,१३) ।
पर्शुर्हे(८६,२३)ति तिसृणां च ऋषिरैन्द्रो वृषाकपिः ॥३६॥
एकादशानां शिष्टानामिन्द्राणी सा पुलोमजा ।

---

(क) लौक्य इति सर्व्वानुक्रमणी ।
(ख) प्रियमेध इति अनुक्रमणिकाविवरणम् ।
(ग) वि हि सोतो(८६, १)रित्यादिविशेषकथनं सर्व्वानुक्रमण्यनुक्रमणिकाविवरणयोर्न दृश्यते । वेदार्थदीपिका तु यथायथमाह स्म ।

पायुरक्षोहणे(८७)[क] सूक्ते भरद्वाजसुतो मुनिः ॥३७॥
हविष्यान्तस्य(८८)[ख] सूक्तस्य मूर्द्धन्वान्नाम दर्शितः[ग] ।
अयन्त्वङ्गिरसः पुत्रो वामदेव्योऽथवा पुनः ॥३८॥
विश्वामित्रसुतो रेणुः सूक्तस्येन्द्रं स्तवे(८९)त्यृषिः ।
सहस्रशीर्षा(९०) सूक्तस्य ऋषिर्नारायणः स्मृतः ॥३९॥
सन्नाग्टवह्नि(९१)रित्यस्मिन् वैतहव्योऽरुणो मुनिः ।
यज्ञस्ये(९२)त्यस्य सूक्तस्य शार्य्यातो नाम मानवः ॥४०॥
महि द्यावे(९३)ति सूक्तस्य पार्थ्य[घ]स्तान्व ऋषिः स्मृतः ।
प्रैते(९४) सूक्तस्य सर्पोऽयं काद्रवेयोऽर्बुदो मुनिः ॥४१॥
उर्व्वशी च हये(९५) सूक्ते मुनिरैलः पुरूरवाः ।
ऐलस्य वाक्यमत्रैताः प्रथमाथ चतुर्द्दशी ॥४२॥
तृतीया द्वादशी षष्ठी सप्तदश्या सहेति षट् ।
सचा य(९५,८)दिति तिस्रस्तु उर्व्वश्या उत्तरा नव ॥४३॥
प्र ते मह(९६) इति त्वस्य बरुरङ्गिरसः सुतः ।
ऐन्द्रः सर्व्वहरिर्वायमृषिरित्यवगम्यताम् ॥४४॥
या ओषधी(९७)[ङ]स्तु सूक्तस्य ऋषिराथर्व्वणो भिषक् ।
आर्ष्टिषेणस्तु देवापिर्मुनिः सूक्ते बृहस्पते(९८) ॥४५॥

---

(क) मोक्षमूलरसम्पादितऋग्वेदे सर्व्वानुक्रमण्यामनुक्रमणिकाविवरणे च रक्षोहणमिति पाठो वर्त्तते ।
(ख) मोक्षमूलरसम्पादितऋग्वेदे हविष्यान्तमिति पाठोऽस्ति ।
(ग) दर्शक इति पाठः सम्भवितुमर्हति ।
(घ) पार्थ इति सर्व्वानुक्रमणी ।
(ङ) औषधीरिति घ० ञ० ।

कं नः (९९)सूक्तस्य वम्रस्तु वैखानस ऋषिः स्मृतः।
इन्द्र दृह्ये(१००)ति सूक्तस्य दुवस्युर्नाम वान्दनः ॥४६॥
उद्बुध्यध्वं(१०१) बुधः सौम्यो भार्म्यश्वो मुद्गलः प्र ते(१०२)।
आशुः शिशानः(१०३)सूक्तेऽस्मिन्नैन्द्रोऽप्रतिरथो मुनिः॥४७॥
असावि सोम(१०४) इत्यस्य वैश्वामित्रोऽष्टकस्त्वृषिः।
कदा(१०५) सूक्ते सुमित्रो वा दुर्मित्रो वा स कुत्सजः॥४८॥
उभा उ(१०६)सूक्ते भूतांशः कश्यपस्य सुतो मुनिः।
आविः (१०७)सूक्तस्य चैतस्य दिव्यो वाङ्गिरसः स्वयम्॥४९॥
प्राजापत्या दक्षिणा वा त्वृषिरित्यवगम्यताम्।
किमिच्छन्ती(१०८)ति सूक्तस्य युजामासामृचामृषिः॥५०॥
अन्यायास्तु शुनी नाम सरमा पणयो(क)ऽयुजाम्।
तेऽवद(१०९)न्निति सूक्तस्य ब्रह्मजाया जुहूर्मुनिः॥५१॥
अथवोर्ध्वनाभा नाम ब्रह्मपुत्र ऋषिः स्मृतः।
समिद्धो अद्य(११०) सूक्तस्य जमदग्निर्भृगोः सुतः॥५२॥
रामस्तु जामदग्न्यो वा मुनिरित्यवगम्यताम्।
परे चत्वारि सूक्तानि विरूपा ऋषयो विदुः॥५३॥
अष्टादंष्ट्रो मुनिस्तत्र सूक्तस्यास्य मनीषिणः(१११)।
नभःप्रभेदनः(ख) सूक्ते परे त्विन्द्र पिबे(११२)त्यृषिः॥५४॥
शतप्रभेदनः(ग)सूक्ते तमस्ये(११३)ति तदुत्तरे।

---

(क) पणय इत्यत्र असुरा इति अनुक्रमणिकाविवरणे पठ्यते।

(ख) नभःप्रवेदन इति अनुक्रमणिकाविवरणम्।

(ग) शरप्रभेदनः इति घ० च०।

घर्मे(११४)ति सूक्ते मभिस्तु घर्मौ वा तत्र तापसः ॥५५॥
विच इच्छिग्मोः (११५)सूक्तस्य वार्ष्टिहव्य उपस्तुतः ।
पिबा सोम(११६)मिति तस्मिन् स्थौरो वाग्नियुतो मुनिः ॥५६॥
अग्नियूपोऽथवा स्थौरो मुनिरित्यवगम्यताम् ।
न वा उ देवाः(११७) सूक्तस्य भिक्षुराङ्गिरसः सुतः ॥५७॥
अमहीयुसुतः सूक्तस्याग्ने हंसी(११८)त्युरुक्षयः ।
इति वा(११९) इति सूक्तस्य मुनिरिन्द्रसुतो लवः ॥५८॥
अथर्वणः सुतः सूक्ते तदिदास(१२०) बृहद्दिवः ।
हिरण्यगर्भः सं(१२१) सूक्ते(क) प्रजापतिसुतो मुनिः ॥५९॥
वसुं न(१२२)सूक्ते वासिष्ठो नाम्ना चित्रमहा ऋषिः ।
अयं वेन(१२३)स्य सूक्तस्य वेनो नाम भृगोः सुतः ॥६०॥
इमं न(१२४) इति सूक्तेऽस्मिन्निन्द्रः स्वयमृषिः स्मृतः ।
अदेवाद्देव(१२४,२) इत्यादि तिसृणामग्निरच तु ॥६१॥
अहं रुद्रेभि(१२५)रित्यस्मिन्नाम्भृणी नाम वागृषिः ।
न तमंहो न(१२६) ग्रैलूषिः(ख) सूक्ते कुल्मलबर्हिषः(ग) ॥६२॥
अंहोमुग्वामदेव्यो वा ऋषिरित्यवगम्यताम् ।
रात्री व्यख्य(१२७)दिति तस्मिन् सौभरः कुशिको(घ) मुनिः ॥६३॥

---

(क) तत्सूक्ते इति घ० च० ज० ।

(ख) ग्रैलोन्निरिति च०, ग्रैलोग्निरिति ज० ।

(ग) कुल्मवबर्हिष इति ज० । कुल्मलबर्हिष इति सर्व्वानुक्रमणी, अनुक्रमणिकाविवरणञ्च ।

(घ) कुशिकः इति च० ।

भरद्वाजसुता रात्रिरथवा गम्यतामृषिः।
ममाग्ने(१२८) इति सूक्तस्य विहव्योऽङ्गिरसः सुतः॥६४॥
नास(१२९)त्सूक्ते मुनिर्ज्ञेयः परमेष्ठी प्रजापतिः।
यो यज्ञः(१३०) सूक्ते(क) यज्ञस्तु प्राजापत्य ऋषिः स्मृतः॥६५॥
काक्षीवतः सुकीर्तिस्तु सूक्तेऽप प्राच(१३१) उत्तरे।
ईजानं(१३२) सूक्ते मार्मेधः शकपूत ऋषिः स्मृतः॥६६॥
प्रो ष्वस्मा(१३३) इति सूक्तस्य सुदाः पैजवनो मुनिः।
यौवनाश्वस्तु मान्धाता सूक्तस्योभे य(१३४)दित्यृषिः॥६७॥
इहोत्तमामथार्द्धां(१३४,७) गोधा नारी ददर्श ह।
यस्मिन्(१३५) सूक्ते कुमारोऽयमृषिर्यामायनः स्वयम्॥६८॥
मुनयो वातरशना एकर्चाः सप्त केशिनः(१३६)।
जूतिश्च वातजूतिश्च विप्रजूतिर्वृषाणकः॥६९॥
करिक्रतैतशौ च द्वावृष्यशृङ्गश्च सप्तमः।
उत(१३७) सूक्तं सप्तर्षय(ख) एकर्चा एव ते विदुः॥७०॥
तव त्य(१३८) इति सूक्तस्य अङ्गस्त्वृषिरूरोः सुतः।
विश्वावसुः सूर्य(१३९) सूक्ते मुनिर्गन्धर्व एव सः॥७१॥
अग्ने तवे(१४०)ति सूक्तस्य मुनिरग्निस्तु पावकः।
अग्ने अच्छे(१४१)ति सूक्तस्य मुनिरग्निस्तु तापसः॥७२॥
अयं(१४२) सूक्ते इयाः शार्ङ्गा जरिता द्रोण उत्तरः।
सारिसृक्तः स्तम्बमित्रस्त एते पक्षिणो विदुः॥७३॥

---

(क) यो यज्ञस्सूक्ते इति घ० च० ज०।

(ख) भरद्वाजादयः सप्त २६६ पृष्ठतोऽवगन्तव्याः।

स्वं चि(१४३)त्सूक्तस्य साङ्ख्योऽचिरय(१४४)मित्युत्तरस्य तु ।
तार्क्ष्यपुत्त्रः सुपर्णो वा मुनिर्यामायनोऽथवा ॥७४॥
स ऊर्ध्वकृशनो ज्ञेय इन्द्राणीमां खनाम्यृ(१४५)षिः ।
ऐरम्मदो देवमुनिररण्यान्यृ(१४६)त्यृषिः स्मृतः ॥७५॥
सुवेदा नाम शैरीषिः[क] अन्त(१४७) सूक्ते मुनिः स्मृतः ।
सुष्वाणाम(१४८)न्तु सूक्तस्य वैन्यो नाम पृथुर्मुनिः ॥७६॥
सविता(१४९) सूक्तस्य चार्चन्[ख] हैरण्यस्तूप एव सः ।
मृलीको नाम वासिष्ठः समिद्धश्चि(१५०)दित्यृषिः ॥७७॥
श्रद्धयाग्नि(१५१)रिति त्वस्य श्रद्धा कामायनी मुनिः ।
भरद्वाजसुतः शासः शास इत्थे(१५२)त्यृषिः स्मृतः ॥७८॥
इन्द्रस्य मातरो यास्ता ऋषयो देवजामयः ।
ईङ्खयन्ती(१५३)रिति त्वस्य सोमो(१५४) वैवस्वती यमी ॥७९॥
अरायि(१५५) सूक्तेऽयमृषिर्भारद्वाजः शिरिम्बिठिः[ग] ।
अग्निं हिन्वन्तु नः(१५६) सूक्ते केतुरग्निसुतो मुनिः ॥८०॥
इमा नु(१५७) भुवन आप्त्यः साधनो भौवनोऽथवा ।
सूर्यो न(१५८) इति सूक्तस्य सौर्यश्चक्षुरृषिः स्मृतः ॥८१॥
उदसौ(१५९) त्वस्य पौलोमी शची नाम मुनिः स्मृतः ।
ऋषिस्तोमस्य(१६०) सूक्तस्य वैश्वामित्रस्तु पूरणः ॥८२॥
प्राजापत्यस्तु सुश्रामौ(१६१)त्यपश्यद्यक्ष्मनाशनः ।

---

(क) शैलूषिरिति घ० च० ज० । अनुक्रमणिकाविवरणञ्च ।

(ख) चार्चन्त इति घ० च० ज० ।

(ग) शिरिम्बिठ इति सर्व्वानुक्रमणी ।

रक्षोहायमृषिर्ब्राह्मो ब्रह्मणाग्नि(१६२)रमुष्य तु ॥८३॥
अचीभ्या(१६३)मिति सूक्तस्य काश्यपो विवृहा मुनिः।
प्रचेतास्तु जगौ सूक्तमपेहो(१६४)त्यङ्गिरःसुतः ॥८४॥
देवाः कपोतः(१६५) सूक्तस्य कपोतो नैर्ऋतस्त्वृषिः।
ऋषभं मे(१६६)ति सूक्तस्य वैराज ऋषभो मुनिः ॥८५॥
शाक्करो वा स ऋषभस्तुभ्येद(१६७)मिति तूत्तरे।
विश्वामित्रजमदग्नी ऋषिर्गाथिनभार्गवौ ॥८६॥
वातायनो मुनिः सूक्तं वातस्ये(१६८)त्यनिलो जगौ।
मयोभूः(१६९) शबरः सूक्तं काक्षीवत ऋषिर्जगौ ॥८७॥
विभ्राट्(१७०)सूक्तमिदं सौर्यो नाम्ना विभ्राडृषिर्जगौ।
इटतो[क] भार्गवः सूक्तं लन्यमिटतो(१७१) जगौ ॥८८॥
त्रीण्युत्तराणि सूक्तानि विदुरङ्गिरसस्त्रयः।
आयाह्या(१७२)ता(१७३)मि(१७४)संवर्त्तो ध्रुवोऽभीवर्त्त इत्यमी ॥८९॥
प्र वो ग्रावाण(१७५) इत्यस्मिन्नूर्ध्वग्रावार्बुदिर्मुनिः।
प्र सूनव(१७६) इति तस्य सूनुर्नामार्भवो मुनिः ॥९०॥
प्राजापत्यः पतङ्गोऽयं पतङ्गं(१७७) सूक्तमुक्तवान्।
अरिष्टनेमिस्तार्क्ष्योऽयं जगौ सूक्तं त्यमूष्वि(१७८)ति ॥९१॥
उत्तिष्ठते(१७९)ति चैकर्चाः सूक्तमेतत्त्रयो विदुः।
शिबिरौशीनरः पूर्वः काशिराजः प्रतर्दनः ॥९२॥
रौहिदश्वो वसुमना इत्येत ऋषयः क्रमात्।

---

(क) इटत इत्यत्र प्रथमायास्तलिक्।

प्र ससाहिष(१८०)[क] इत्यस्मिन्निन्द्रपुत्त्र ऋषिर्जयः ॥९३॥
प्रथो नाम स वासिष्ठो भारद्वाजश्च सप्रथः।
घर्मः सौर्यस्त्व एकर्षाः प्रथः(१८१) सूक्त इमे विदुः ॥९४॥
बार्हस्पत्यस्तपुर्मूर्धा मुनिः सूक्ते बृहस्पतिः[ख](१८२)।
प्राजापत्यस्य सूक्तन्तदपश्यन्त्वा(१८३) प्रजावतः ॥९५॥
विष्णुर्योनि(१८४)मिति त्वस्मिंस्त्वष्टा वा गर्भकृन्मुनिः।
प्राजापत्योऽथवा विष्णुर्नेजमेषस्तदुत्तरे ॥९६॥
ऋषिः सत्यधृतिर्नाम महि(१८५) सूक्ते स वारुणिः।
वात आ वातु(१८६) सूक्तस्य प्र नून(१८८)मिति[ग] तस्य च ॥९७॥
वत्सः श्येनश्च तावेतावग्निपुत्त्रावृषी पृथक्।
आयङ्गौ(१८९)रिति सूक्तस्य सार्पराज्ञी मुनिः स्मृतः[घ] ॥९८॥
मधुच्छन्दःसुतः सूक्त ऋत(१९०)मित्यघमर्षणः।
संसं(१९१) सूक्ते संवनन ऋषिरङ्गिरसः सुतः ९९॥

---

(क) मोक्षमूलरसम्पादितऋग्वेदे प्र ससाहिषे इति पाठो विद्यते।

(ख) बृहस्पताविति घ० च० ज०।

(ग) आर्षानुक्रमण्यां, वात आ वातु, प्र नूनमिति सूक्तद्वयस्य वत्सः श्येनश्च इमौ द्वावृषी क्रमेण प्रदर्शितौ। प्राग्नये (१८७) इति सूक्तस्य ऋषिर्न प्रदर्शितः। सर्व्वानुक्रमण्या ऋ० २० विवरणे च, वात आ वातु इति सूक्तस्य वातायन उल ऋषित्वेनाभिहितः। प्राग्नये इति सूक्तस्य आग्नेयो वत्स ऋषिः, प्र नूनमिति सूक्तस्य आग्नेयः श्येन ऋषिर्निर्दिष्टः।

(घ) स्मृतेति घ०।

गोधा घोषा विश्ववारा पालोपनिषन्निषत्।
ब्रह्मजाया जुहूर्नाम अगस्त्यस्य स्वसादितिः॥१००॥
इन्द्राणी चेन्द्रमाता च सरमा रोमशोर्वशी।
लोपामुद्रा च नद्यश्च यमी नारी च शश्वती॥१०१॥
श्रीर्लाक्षा सार्पराज्ञी वाक् श्रद्धा मेधा च दक्षिणा।
रात्री सूर्या च सावित्री ब्रह्मवादिन्य ईरिताः।
स गौतमो(क) वामदेवो याः खिलास्ता ऋचो जगौ॥१०२॥

येर्वेदमन्त्राः सकलाः सुदृष्टा
येनार्षानुक्रमणी प्रदिष्टा।
नमोऽस्तु तेभ्यो मुनिपुङ्गवेभ्यो
भवन्तु ते चापि मयि प्रसन्नाः॥१०३॥

इति दशमं मण्डलम्॥

इति शौनकाचार्यकृतार्षानुक्रमणी समाप्ता॥

---

वं: काणि

---

(क) स गौतम इति ज०।

# अथ छन्दोऽनुक्रमणी।

## प्रथमं मण्डलम्।

ऋग्वेदगतसूक्तानां सूक्तस्थानामृचामपि।
यानि छन्दांसि विद्यन्ते तानि वक्ष्यामि सम्प्रति ॥१॥
गायत्रं नव सूक्तानि मधुच्छन्दस आदितः।
आनुष्टुभे परे ज्ञेये दशमैकादशे उभे ॥२॥
मेधातिथेस्तु सूक्तेषु गायत्रेषूत्तरे त्विति।
पुरउष्णिक्[क] परानुष्टुप्[ख](१) तिस्रस्त्वान्त्या[ग] अनुष्टुभः ॥३॥
शुनःशेपस्य सूक्तानि गायत्राण्येव तत्र तु।
त्रिष्टुभौ प्रथमस्याद्ये[घ] षष्ठ्याद्या[ङ]श्च तथा दश ॥४॥
उत्तमा[च] च चतुर्थस्य षोडशी[छ] चोत्तमस्य या।
षष्ठन्तु पाङ्क्त[ज]माद्यास्तु पञ्चमे षड[झ]नुष्टुभः ॥५॥
ऋगस्माकं शिप्रिणीना[ञ]मेषा पादनिचृन्मता।

(१) सर्व्वानुक्रमण्यामनुक्रमणिकाविवरणे च सूक्तस्यास्य एकविंशसङ्ख्यकाया ऋचश्छन्दः प्रतिष्ठेत्युक्तम्।

(क) सू० २३, ऋ० १९। (ख) सू० २३, ऋ० २०। (ग) सू० २३, ऋ० २२, २३, २४। (घ) सू० २४, ऋ० १, २। (ङ) सू० २४, ऋ० ६, ७, ८, ९, १०, ११, १२, १३, १४, १५। (च) सू० २७, ऋ० १३। (छ) सू० ३०, ऋ० १६। (ज) सू० २९। (झ) सू० २८, ऋ० १, २, ३, ४, ५, ६। (ञ) सू० ३०, ऋ० ११।

हिरण्यस्तूपसूक्तानि त्रैष्टुभान्यथ तत्र तु ॥६॥
प्रथमस्य चतुर्थस्य जागते[क] प्रथमे तयोः।
अष्टमी षोड़शी चान्त्या[ख] त्रिष्टुभस्त्वरमे पुनः ॥७॥
अन्त्या च नवमी[ग] चापि त्रिष्टुभावेव गम्यताम्।
उत्तमे तु जगत्याद्या[घ] नवमी[ङ] जगतीनिचृत् ॥८॥
कण्वस्य प्रथमं[च] सूक्तं चतुर्थं[छ] पञ्चमं[ज] च यत्।
प्रस्कण्वस्य च तान्ये[झ]व प्रगाथा बार्हता हृचाः ॥९॥
प्रस्कण्वस्य द्वितीय[ञ]स्य षष्ठ[ट]स्यानुष्टुभे उभे।
चतस्रश्चोत्तमस्यान्त्याः[ठ] कण्वस्यानुष्टुबुत्तमा[ड] ॥१०॥
सर्वा गायत्र्य एवान्याः कण्वप्रस्कण्वयोर्ऋचः।
सव्यस्य सप्त सूक्तानि[ढ] जागतान्येव तत्र तु ॥११॥
प्रथमस्य तृतीयस्य हृचोऽन्त्य[ण]स्त्रैष्टुभः स्मृतः।
त्वमाविथा[त]सनं चत्रं[थ] तुभ्येदेते[द] सः शेवृधम्[ध] ॥१२॥
त्वं भुव[न]स्त्रिष्टुभस्त्वेता आर्चन्नत्रे[प]त्यृचा सह।

---

(क) सू० ३१, ३४। (ख) सू० ३१, ऋ० ८, १६, १८। (ग) सू० ३४, ऋ० ९, १२। (घ) सू० ३५, ऋ० १। (ङ) सू० ३५, ऋ० ९। (च) सू० ३६। (छ) सू० ३९। (ज) सू० ४०। (झ) सू० ४४, ४७, ४८। (ञ) सू० ४५। (ट) सू० ४९। (ठ) सू० ५०, ऋ० १०, ११, १२, १३। (ड) सू० ४३, ऋ० ९। (ढ) सू० ५१, ५२, ५३, ५४, ५५, ५६, ५७। (ण) सू० ५१, ऋ० १४, १५; सू० ५३, १०, ११। (त) सू० ५४, ऋ० ६। (थ) सू० ५४, ऋ० ८। (द) सू० ५४, ऋ० ९। (ध) सू० ५४, ऋ० ११। (न) सू० ५२, ऋ० १३। (प) सू० ५२, ऋ० १५।

गोधमः प्रथमाः पञ्च(क) जगत्यस्त्रिष्टुभः पराः(ख) ॥१३॥
सर्वा उपोत्तमाः(ग) सूक्ता जागतं सूक्तमुत्तमम्(घ) ।
अस्यापि चोत्तमा ज्ञेया त्रिष्टुबेवेति नु स्थिरम्(ङ) ॥१४॥
पराशरस्य द्विपदा आषष्ठा(च) त्रिष्टुभः पराः(छ) ।
गौतमस्य तु सूक्तेषु द्वे पाङ्क्ते सप्तमाष्टमौ(ज) ॥१५॥
नवमं च जगत्यन्तं(झ) दशम(ञ)न्त्वथ जागतम् ।
प्रथम(ट)श्च द्वितीय(ठ)श्च गायत्रं पञ्चम(ड)न्त्विदम् ॥१६॥
तृतीय(ढ)श्च चतुर्थ(ण)श्च त्रैष्टुभे त्रैष्टुभौष्णिहौ ।
षष्ठस्याद्ये तृचौ ज्ञेयौ शिष्टा गायत्र्यः पराः(त) १७॥
एकादशस्य सूक्तस्य पूर्वावानुष्टुभौ तृचौ(थ) ।
औष्णिहास्तु(द) पराः पाङ्क्ता(ध) गायत्र(न) त्रैष्टुभा(प)स्तृचाः ॥१८॥
विज्ञेयस्ततो वार्हतः प्रागाथस्तूत्तमो(फ) तृचः ।
द्वादशं(ब) जागतं सूक्तं त्रिष्टुबन्त्या च पञ्चमी(भ) ॥१९॥

---

(क) सू० ५८, ऋ० १, २, ३, ४, ५। (ख) सू० ५८, ऋ० ६, ७, ८, ९। (ग) सू० ५९, ६०, ६१, ६२, ६३। (घ) सू० ६४। (ङ) सू० ६४, ऋ० १५। (च) सू० ६५, ६६, ६७, ६८, ६९, ७०। (छ) सू० ७१, ७२, ७३। (ज) सू० ८०, ८१। (झ) सू० ८२, ऋ० ६। (ञ) सू० ८३। (ट) सू० ७४। (ठ) सू० ७५। (ड) सू० ७८। (ढ) सू० ७६। (ण) सू ७७। (त) सू० ७९, ऋ० १, २, ३। ४, ५, ६। ७, ८, ९। (थ) सू० ८४, ऋ० १, २, ३, ४, ५, ६। (द) सू० ८४, ऋ ७, ८, ९। (ध) सू० ८४, ऋ० १०, ११, १२। (न) सू० ८४, ऋ० १३, १४, १५। (प) सू० ८४, ऋ० १६, १७, १८। (फ) सू० ८४, ऋ० १९, २०। (ब) सू० ८५। (भ) सू० ८५, ऋ० ५, १२।

अथोद्गश्च(क) गायत्रं आगतं तदनन्तरम्(ख)।
प्रस्तारपङ्क्ती आद्यन्त्ये(ग) आ विद्युन्मङ्गिरस्य तु ॥२०॥
त्रिष्टुभस्तु द्वितीयाद्या(घ) विराड्रूपा तु पञ्चमी(ङ)।
षोडशं आगतं(च) त्वस्य तृचान्त्य(छ)स्त्रैष्टुभः स्मृतः ॥२१॥
षष्ठी(ज)त्वेका विराट्स्थाना सा च स्वस्ति न इत्यसौ।
ऋजुनीती(झ)ति गायत्रन्त्वस्यैकानुष्टुबुत्तमा(ञ) ॥२२॥
पराणि(ट)त्रैष्टुभान्येव तत्रापि प्रथमे पुनः।
त्वं सोमासी(ठ)ति गायत्र्यो द्वादशोष्णिकतः परा(ड) ॥२३॥
चतु(ढ)र्जगत्यः प्रथमा उपान्त्यान्त्याः(ण) षडुष्णिहः।
उत्तमस्य तु सूक्तस्य तिस्रोऽ(त)नुष्टुभ आदितः ॥२४॥
नवमीप्रभृति(थ)स्तस्य गायत्रोऽस्य परस्तृचः।
कुत्ससूक्तेषु गायत्रं चतुर्थं(द) त्रैष्टुभेष्वथ ॥२५॥
पाङ्क्तं द्वादशमं(ध) सूक्तमुद्धृत्यान्त्यान्तथाष्टमीम्।
महाबृहत्यष्टमी(न) सा यवमध्या च योद्धृता ॥२६॥

---

(क) सू० ८६। (ख) सू० ८७। (ग) सू० ८८, ऋ० १, ६। (घ) सू० ८८, ऋ० २, ३, ४। (ङ) सू० ८८, ऋ० ५। (च) सू० ८९। (छ) ८९, ऋ० ८, ९, १०। (ज) सू० ८९, ऋ० ६। (झ) सू० ९०। (ञ) सू० ९०, ऋ० ९। (ट) सू० ९१, ९२, ९३। (ठ) सू० ९१, ऋ० ५, ६, ७, ८, ९, १०, ११, १२, १३, १४, १५, १६। (ड) सू० ९१, ऋ० १७। (ढ) सू० ९१, ऋ० १, २, ३, ४। (ण) सू० ९१, ऋ० १८, १९, २०, २१, २२, २३। (त) सू० ९३, ऋ० १, २, ३। (थ) सू० ९३, ऋ० ९, १०, ११। (द) सू० ९७। (ध सू० १०५। (न) सू० १०५, ऋ० ८।

प्रथम(क)श्चैकविंश(ख)श्च नवम(ग)श्चाष्टमं(घ) ततः।
ऊर्ध्व(ङ)श्च षोडश त्रीणि(च) सप्तर्चश्च त्रयोदशम्(छ) ॥२७॥
एतानि आगतान्येषु प्रथमेऽन्यं तृचं(ज) विना।
एकोनविंशे(झ) चैकविंशे(ञ) तथैवान्यं तृचं विना ॥२८॥
ऋचं त्रयोदशे(ट) त्वन्त्यां नवमे(ठ)ऽष्टादशे(ड) त्रिना।
ततं मे पञ्चमीं चान्त्या(ढ)मष्टमेऽन्त्यौ तृचौ(ण) विना ॥२९॥
कक्षीवतस्तु सूक्तेषु चतुर्थं(त) तस्य आगतम्।
उपोत्तमस्य चर्चौ द्वे चतुर्थी पञ्चमी(थ) च या ॥३०॥
पञ्चमस्य तु गायत्र्यस्तिस्रोऽन्त्याः प्रथमा(द) च या।
अनुष्टुभौ विराजौ वा नवमी चाष्टमी(ध) च या ॥३१॥
अनुष्टुप्तु चतुर्थी(न) च सप्तमी(प) बृहती विराट्।
तृतीया पञ्चमी षष्ठी द्वितीया(फ) चोष्णिहाक्षरैः ॥३२॥
गायत्री वा द्वितीया(ब)स्य तृतीया(भ) नुष्टुबेव वा।

---

(क) सू० ९४। (ख) सू० ११४। (ग) सू० १०२। (घ) सू० १०१। (ङ) सू० ११४। (च) सू० ११०, १११, ११९। (छ) सू० १०६। (ज) सू० ९४, ऋ० १५, १६। (झ) सू० ११३, ऋ० १९, २०। (ञ) सू० ११५, ऋ० १०, ११। (ट) सू० १०६, ऋ० ७। (ठ) सू० १०२, ऋ० ११। (ड) सू० १११, ऋ० ५। (ढ) सू० ११०, ऋ० ५, ९। (ण) सू० १०१, ऋ० ८, ९, १०, ११। (त) सू० ११९। (थ) सू० १२५, ऋ० ४, ५। (द) १२०, ऋ० १, १०, ११, १२। (ध) सू० १२०, ऋ० ८, ९। (न) १२०, ऋ० ४। (प) सू० १२०, ऋ० ७। (फ) सू० १२०, ऋ० २, ३, ५, ६। (ब) सू० १२०, ऋ० २। (भ) सू० १२०, ऋ० ३।

सप्तमस्य विराड्रूपे भूतं मे(क) आव(ख) इत्यृचौ ॥२३॥
उत्तमस्य तु सूक्तस्य द्वे वाद्यन्त्ये(ग) अनुष्टुभौ।
अवशिष्टानि सूक्तानि(घ) त्रैष्टुभान्यवगम्यताम् ॥२४॥
आत्यष्ट्यान्यथ सूक्तानि परुच्छेपस्य तत्र तु।
आद्यस्यातिधृतिः षष्ठी(ङ) सुषुमे(च)त्यतिशाक्वरम् ॥२५॥
सह प्रथा व(छ) इत्यृग्भ्यां तृतीया(ज)त्यष्टिरुत्तमा(झ)।
अष्टमस्यान्त्यया(ञ) साकं नवमस्याप्युपोत्तमे(ट) ॥२६॥
चतुर्थस्योत्तमा(ठ) त्रिष्टुब्दशमस्यो(ड)त्तमस्य(ढ) च।
सप्तमस्यादितस्त्रिष्टुबेकस्या(ण)नुष्टुभस्तृचः(त) ॥२७॥
गायत्री(थ) च धृति(द)श्चैव बृहत्यन्यस्य पञ्चमी(ध)।
द्वे सूक्ते दीर्घतमसः प्रथमे(न) जागते तयोः ॥२८॥
पूर्वस्य दशमी(प) त्रिष्टुबथ चानुष्टुभं परम्(फ)।
षष्ठञ्च जागतं सूक्तं चतुर्थं पञ्चमं(ब) च यत् ॥२९॥

---

(क) सू० १२२, ऋ० ६। (ख) सू० १२२, ऋ० ५। (ग) सू० १२६, ऋ० ६, ७। (घ) सू० १६, १७, १८, २१, २३, २४, २५। (ङ) सू० १२७, ऋ० ६। (च) सू० १३७। (छ) सू० १२९, ऋ० ८, ९। (ज) सू० १२९, ऋ० ३। (झ) सू० १२९, ऋ० ११। (ञ) सू० १३४, ऋ० ६। (ट) सू० १३५, ऋ० ७, ८। (ठ) सू० १३०, ऋ० १०। (ड) सू० १३६, ऋ० ७। (ढ) सू० १३९, ऋ० ११। (ण) सू० १३३, ऋ० १। (त) सू० १३३, ऋ० २, ३, ४। (थ) सू० १३३, ऋ० ५। (द) सू० १३३, ऋ० ६। (ध) सू० १३९, ऋ० ५। (न) सू० १४०, १४१। (प) सू० १४०, ऋ० १०। (फ) सू० १४२। (ब) सू० १४३, १४४, १४५।

वैराजं दशमं[क] तस्मात्परे औष्णिह[ख] जागते[ग] ।
जागतानि तु सूक्तानि षोडशप्रभृतीनि षट्[घ] ॥४०॥
अनुष्टुबन्तादन्यानि वक्ष्ये रुद्रेतित्रैष्टुभात्[ङ] ।
त्रयोविंशस्य सूक्तस्य सह षष्ठ्या तृतीयया[च] ॥४१॥
अस्य वामीय सूक्तस्य जगत्यः षड़िमा ऋचः ।
पञ्चपादं[छ] साकं जानां[ज] यद्गायत्रे[झ] अयं स[ञ] च ॥४२॥
सप्तार्धगर्भा[ट] गौरी[ठ] स्व तस्यानुष्टुबुपोत्तमा[ड] ।
प्रस्तारपङ्क्तिस्तु विराड्द्वाचत्वारिंशृग[ढ] स्य या ॥४३॥
अतोऽन्यत्त्रैष्टुभं सर्व्वं शिष्टमत्रावगम्यताम् ।
अत्र द्वित्रिष्टुबन्तानि प्रथमे द्वे[ण] अबोधि[त] च ॥४४॥
त्रिष्टुबन्तानि चैतानि जागतेषु प्रतव्यसीम्[थ] ।
तं पृच्छत[द] किमु श्रेष्ठ[ध] इति चौष्णवगम्यताम् ॥४५॥
अगस्त्यस्य च सूक्तेषु गायत्रं सूक्तमष्टमम्[न] ।
द्वितीयं जागतं सूक्तं हृच[प] मुद्धृत्य तृत्तमम् ॥४६॥
अष्टादशं[फ] चतुर्थं[ब] स्व द्वे एते जागते तयोः ।

(क) सू० १४९ । (ख) सू० १५० । (ग) सू० १५१ । (घ) सू० १५५, १५६, १५७, १५९, १६०, १६१ । (ङ) सू० १५८ । (च) सू० १६२, ऋ० ३, ६ । (छ) सू० १६४, ऋ० १२ । (ज) सू० १६४, ऋ० १५ । (झ) सू० १६४, ऋ० २३ । (ञ) सू० १६४, ऋ० २९ । (ट) सू० १६४, ऋ० ३६ । (ठ) १६४, ऋ० ४१ । (ड) सू० १६४, ऋ० ५१ । (ढ) सू० १६४, ऋ० ४२ । (ण) सू० १४०, ऋ० १२, १३ । सू० १४१, ऋ० १२, १३ । (त) सू० १४७, ऋ० ५, ६ । (थ) सू० १४३, ऋ० १ । (द) १४५, ऋ० १ । (ध) सू० १६१, ऋ० १ । (न) सू० १७२ । (प) सू० १६६, ऋ० १४, १५ । (फ) सू० १८२ । (ब) सू० १६८ ।

आद्यादृद्धृत्य षष्ठ्यन्त्ये[क] चतुर्थाद्योत्तमं तृचम्[ख] ॥४७॥
षष्ठ[ग]मेकादश[घ]ञ्चास्य सूक्ते आनुष्टुभे परे ।
उभयोरुत्तमा[ङ] त्रिष्टुबाद्या[च] तु बृहती तयोः ॥४८॥
एकादशे[छ]ऽस्य बृहती स्कम्भोग्रीवीति गम्यताम् ।
पञ्चमस्य तु सूक्तस्य द्वितीया[ज]ऽभुरिग्विराट् स्मृता ॥४९॥
द्वादशस्योत्तमा[झ]त्रिष्टुप् शिष्टाः सर्वा अनुष्टुभः ।
एका पञ्चदशे सूक्ते पञ्चमी[ञ] बृहतीनिचृत् ॥५०॥
त्रयोविंश[ट]न्तु गायत्रं तस्योष्णिक् प्रथमा[ठ] तु त्वृक् ।
अनुष्टुब्गर्भरूपोष्णिगथवैषा[ड]वगम्यताम् ॥५१॥
तृतीया पञ्चमी षष्ठी सप्तमी[ढ]ता अनुष्टुभः ।
अनुष्टुब्बृहती चान्त्या[ण] गायत्रं सूक्तमुत्तरम्[त] ॥५२॥
विज्ञेय उत्तमे सूक्ते दशमीप्रभृतिस्तृचः[थ] ।
आनुष्टुभं महापङ्क्ती महा च बृहती परा[द] ।
अवशिष्टानि सूक्तानि [ध]त्रैष्टुभान्यवगम्यताम् ॥१५३॥

इति प्रथमं मण्डलम् ।

---

(क) सू० १८२, ऋ० ६, ८ । (ख) सू० १६८, ऋ० ८, ९, १० । (ग) सू० १७० । (घ) १७५ । (ङ) सू० १७०, ऋ० ५; सू० १७५, ऋ० ६ । (च) सू० १७०, ऋ० १ । १७५, १ । (छ) सू० १७५, ऋ० १ । (ज) सू० १६९, ऋ० २ । (झ) १७६. ऋ० ६ । (ञ) सू० १६९, ऋ० ५ । (ट) सू० १८७ । (ठ) सू० १८७, ऋ० १ । (ड) सू० १८७, ऋ० २ । (ढ) सू० १८७, ऋ० ३, ५, ६, ७ । (ण) सू० १८७, ऋ० ११ । (त) सू० १८८ । (थ) सू० १९१, ऋ० १०, ११, १२ । (द) सू० १९१, ऋ० १६ । (ध) सू० ६६, ६७, ६९, ७१, ७२, ७३, ७४, ७७, ७८, ७९, ८०, ८१, ८३, ८४, ८५, ८६, ८९, ९० ।

## अथ द्वितीयं मण्डलम् ।



सूक्त गृत्समदस्याथ प्रथमे(क) जागते उभे ।
साध्वपांसी(ख)ति त्र्यर्चौ द्वे तृतीये त्रैष्टुभे सति ॥१॥
त्रैष्टुभानुष्टुभे त्वस्य चतुर्थं पञ्चमं(ग) च यत् ।
गायत्र(घ) माष्टमात्स्त्रैं तत्रैकानुष्टुबुत्तमा(ङ) ॥२॥
ऊर्ध्वं चत्वारि(च) षड्विंशादूर्ध्वञ्च द्वे(छ) त्रयोदशात् ।
त्रीणि(ज) सप्तदशादूर्ध्वमूर्ध्वं चत्वारि(झ) चाष्टमात् ॥३॥
सर्वाण्येतानि सूक्तानि त्रैष्टुभानि त्रयोदश ।
उत्तमस्योत्तमा(ञ)मेषामुद्धृत्य जगतीमृचम् ॥४॥
विश्वं सत्य(ट)मिति त्रिष्टुब्बृहस्पते अती(ठ)ति च ।
अतोऽन्यच्चागतं सूक्तं प्रागाते पित(ड)रित्यतः ॥५॥

---

(क) सू० १, २ । (ख) सू० ३, ऋ० ६, ७ । (ग) सू० ४, ५ । (घ) सू० ६, ७, ८ । (ङ) सू० ८, ऋ० ६ । (च) सू० २६, २७, २८, २९ । (छ) सू० १४, १५ । (ज) सू० १८, १९, २० । (झ) सू० ९, १०, ११, १२ । (ञ) सू० ४३, ऋ० ३ । (ट) सू० २४, ऋ० १२ । (ठ) सू० २३, ऋ० १५ । (ड) सू० ३३ ।

अच्छा[क]दि सूक्तमुद्धृत्य द्वाविंश[ख]मतिशाकरम् ।
अष्टिपञ्चपदावन्त्ये[ग] तृतीयः[घ] षोड़शाक्षरः ॥६॥
सिनीवालि[ङ] यासुबाहु[च] र्याङ्गुरि[छ]त्यनुष्टुभः ।
त्रैष्टुभस्य तु शेषस्य चतुर्थं[ज] पञ्चमं[झ] च यत् ॥७॥
जागतानि द्वितीयञ्च[ञ] द्वितीयाश्चन्त्त उत्तमम्[ट](१) ।
गायत्रं नवमं[ठ] तस्य सारस्वत्या[ड]वनुष्टुभौ ॥८॥
इमा ब्रह्मे[ढ]ति बृहती योद्धृता[ण] सातिशक्वरी ।
तदस्मै द्विचिष्टुबन्तं[त] सूक्तं सप्तदशन्तु यत् ॥९॥
त्रयोदशं चतुस्त्रिंशमेकत्रिंशं च षोड़शम् ।
एकविंशं त्रयोविंशं चतुर्विंशञ्च सप्त तु ॥१०॥
एतानि[थ] त्रिष्टुबन्तानि गम्यतां जागतेष्वपि ॥२म०॥

इति द्वितीयं मण्डलम् ।

---

(१) पञ्चमोत्तर उत्तमे(द) इति पाठः सम्भवितुमर्हति ।

---

(क) सू० २२, ऋ० १ । (ख) सू० २२ । (ग) सू० २२, ऋ० ४ । (घ) सू० २२, ऋ० ३ । (ङ) सू० ३२, ऋ० ६ । (च) सू० ३२, ऋ० ७ । (छ) सू० ३२, ऋ० ८ । (ज) सू० २३, ३६ । (झ) सू० २४, ३७ । (ञ) सू० २१, ३४ । (ट) सू० २६ । (ठ) सू० ४१ । (ड) सू० ४१, ऋ० १६, १७ । (ढ) सू० ४१, ऋ० १८ । (ण) सू० ४३, ऋ० २ । (त) सू० १७, ऋ० ८, ९ । (थ) सू० १३, ऋ० १३; सू० ३४, ऋ० १५; सू० ३१, ऋ० ७; सू० १६, ऋ० ९; सू० २१, ऋ० ५; सू० २३, ऋ० १९; सू० २४, ऋ० १६ । (द) सू० २५, २६ ।

# अथ तृतीयं मण्डलम्।

द्वितीय[क]श्च तृतीय[ख]श्च विश्वामित्रस्य जागते।
नवमं[ग] बार्हतं सूक्तं त्रिष्टुबस्योत्तमा[घ]निचृत् ॥१॥
औष्णिहं[ङ] द्वे च गायत्रे[च] बार्हतादुत्तराणि तु।
षोड़शे षड़ृचे सूक्ते[छ] प्रगाथा बार्हता दृचाः ॥२॥
तुभ्यं स्तोका[ज]घृतवन्तः[झ] सप्तर्चन्तु त्रयोदशम्[ञ]।
ये वृक्णासः[ट] पुरीष्यासः[ठ] उष्क्रुयस्त्वे[ड]त्यनुष्टुभः ॥३॥
त्रिष्टुबेव विराड्रूपा तुभ्यं श्चोतंत्यृ[ढ]गच या।
सतोबृहत्यौ तत्र द्वे औजिष्ठन्ते[ण] दश त्रिपः[त] ॥४॥
अतोऽन्यत्त्रैष्टुभं सर्वमाग्निर्मथित[थ] इत्यतः।
अनुष्टुभादिगायत्रं[द] वैराजं चोत्तरे[ध] ततः ॥५॥
उत्तरं[न] जागतं तस्य त्रिष्टुभस्तिस्र उत्तमाः[प]।
गायत्रे उत्तरे सूक्ते[फ] तयोः षड़ृच उत्तरे ॥६॥

(क) सू० २। (ख) सू० ३। (ग) सू० ९। (घ) सू० ९, ऋ० ९। (ङ) सू० १०। (च) सू० ११, १२। (छ) सू० १६। (ज) सू० २१, ऋ० १। (झ) सू० २१, ऋ० २। (ञ) सू० १३। (ट) सू० ८, ऋ० ७। (ठ) सू० २२, ऋ० ४। (ड) सू० ८, ऋ० ७। (ढ) सू० २१, ऋ० ४। (ण) सू० २१, ऋ० ५। (त) सू० २२, ऋ० ३। (थ) सू० २३। (द) सू० २४। (ध) सू० २५। (न) सू० २६। (प) सू० २६, ऋ० ७, ८, ९। (फ) सू० २७, २८।

उष्णिक्त्रिष्टुब्जगत्येष[१] तृतीयाप्रभृतितृचः[क] ।
अस्तीद[ख]न्त्रैष्टुभं तस्य जगत्यौ द्वे उपोत्तमे[ग] ॥७॥
एकादशी[घ] च षष्ठी[ङ] च तावन्त्योऽन्या अनुष्टुभः ।
प्रथमा च चतुर्थी च दशमी द्वादशी[च] च या ॥८॥
एता अनुष्टुभः सर्वा नदीस्तोत्रस्य चोत्तमा[छ] ।
अतोऽन्यत्त्रैष्टुभं सर्वं यदिन्द्रं मति[ज]रित्यतः ॥९॥
अनुष्टुभ[झ]न्त्समुद्धृत्य गायत्रं सूक्त[ञ]मष्टमम् ।
गायत्राणि तु वै त्रीणि[ट] त्रैष्टुभ[ठ]न्द्वे [ड]च बार्हते ॥१०॥
षडु[ढ]त्तराणि सूक्तानि त्रैष्टुभान्युत्तरस्य तु ।
जगत्यः प्रथमास्तिस्र[ण]स्तिस्रो गायत्र्य उत्तमाः[त] ॥११॥
गायत्रमुत्तमं[थ] तस्य षष्ठ्ये[द]का जगतीनिचृत् ।
पञ्चमी[ध] चोत्तमे[न] च द्वे त्रिष्टुभस्त्रैष्टुभे परे[प] ॥१२॥
दशमी[फ] तु जगत्यस्य गायत्री च त्रयोदशी[ब] ।

(क) सू० २८, ऋ० ३, ४, ५। (ख) सू० २९। (ग) सू०२९, ऋ०१४, १५। (घ) सू० २९, ऋ० ११। (ङ) सू० २९, ऋ० ६। (च) सू० २९, ऋ० १, ४, १०, १२। (छ) सू० ३३, ऋ० १३। (ज) सू० ३९। (झ) सू० ३७, ऋ० ११। (ञ) सू० ३७। (ट) सू० ४०, ४१, ४२। (ठ) सू० ४३। (ड) सू० ४४, ४५। (ढ) सू० ४६, ४७, ४८, ४९, ५०, ५१। (ण) सू० ५१, ऋ०१, २, ३। (त) सू० ५१, ऋ० १०, ११, १२। (थ) सू० ५२। (द) सू० ५२, ऋ० ६। (ध) सू० ५२, ऋ० ५। (न) सू० ५२ ऋ० ७, ८। (प) सू० ५३। (फ) सू० ५३, ऋ० १०। (ब) सू० ५३, ऋ० १३।

---

(१) एवेति पाठो भवितुमर्हति ।

